(१९) क्षीरस्य सारस्तं नवनीतमित्यर्थः। घनान्धतामसे—अन्धयति चक्षुष्मन्तमन्धं करोतीति अन्धं ; घनं सूचिभेद्यं ; तम एव तामसं, घनम् अन्धं च तामसं यस्मिन् तस्मिन् ; निविडाज्ञानान्धकारपूर्णे इत्यर्थः। न लीयसे—आत्मगोपनं न करोषि, घनतिमिरमयस्थानस्यैव आत्मगोपनोपयोगित्वात्।

(२०) नीलाब्जस्य नीलपद्मस्य मदमोचने गर्व्वनाशके लोचने यस्याः ताम्। वापी—दीर्घिका। मरालिका—हंसी।

(२१) शिशिरकिरणः—चन्द्रः। शैलबाला—पार्व्वती। प्रेतभूमिप्रचारी—प्रेतभूमौ श्मशाने प्रचरति यः सः। कृपयतु—कृपां करोतु, कृपाशब्दात् करोत्यर्थे णिचि कृपि इति नामधातोः रूपम्। कोऽपि—अनिर्व्वचनीयस्वरूपः। देवः—दीव्यतीति देवो द्योतनशीलः। शिवः इति शेषः, असाधारणविशेषणप्रयोगात् विशेष्योपस्थितिः।

(२४) स्वयमेव शूली त्वं कथं नैरुज्याय आरोग्यकामनया मया निषेव्यसे, स्वयमेव कपालभृत् त्वं किं कथम् अन्नाय वा निषेव्यसे। एवं परत्रापि यथायथं योज्यम्। तव शूली—त्रिशूलधारी, शूलरोगाक्रान्तश्च। य आत्मरोगं शमयितुं न शक्नोति, स कथमन्यस्मै आरोग्यं प्रयच्छतीति भावः। एवं अन्यत्रापि। कपालभृत्—नरशिरोऽस्थिरूपभिक्षापात्रधारी, भिक्षुक इत्यर्थः। कामः—विषयभोगः, कन्दर्पश्च। कपर्द्दी—जटाजूटधारी, वराटकमात्रधनश्च। "कपर्द्दः खण्डपरशोर्जटाजूटे वराटके।"—इति मेदिनी। किं तर्हि—तदा कथं निषेव्यसे इत्यत आह अन्तदिन इत्यादि। आलोकनाय—( त्वत्कर्तृकाय ) दर्शनाय। श्मशानचारी त्वमिति हेतोः मदीये जीवच्छरीरे अपतन्नपि मरणदिने श्मशानं नीते शवशरीरे यदि तव कृपाकटाक्षः पतेदिति मत्वा अर्च्यसे इति भावः।

(२५) नगेशः—हिमालयः। धनेशः—कुवेरः। ललाटवह्नेः—ललाटे स्थितो वह्निर्यस्य स तस्य हतभाग्यस्येत्यर्थः। शेषः—परिणामः।

(२६) शिवशरीरे भस्महेतुर्वर्ण्यते एकेति। एका भार्य्या—पार्व्वती। समररसिका—समरस्य रसं वेत्ति या सा, महिषासुरादिभिः युद्धव्यापृतत्वात्। द्वितीया—गङ्गा। निम्नगा—शिरसि स्थापितापि निम्नं गच्छति या सा तथाभूता, पयसां निसर्गेण निम्नगामित्वात्, कुलटानामपि स्वामिनं वञ्चयित्वा दासादौ नीचजने आसक्तत्वाच्च। द्विरदवदनः—द्वौ रदौ दन्तौ यस्य स द्विरदो हस्ती ; द्विरदवदनो गणेशः। षण्मुखः—कार्त्तिकेयः। भस्मदेहः—चिताभस्मलिप्तकायः, स्वगृहं परित्यज्य श्मशानवासीत्यर्थः।

(२७) स्वयं पञ्चमुखः शिव इति शेषः। गृहे चेत् अन्नपूर्णा न तिष्ठेदिति शेषः। तदा दिगम्बरः—दिश एव अम्बरं वस्त्रं यस्य स शिवः, निर्धन इत्यर्थः ; तथा च—"दिगम्बरत्वेन निवेदितं वसु" इति कुमारे। अतएव पञ्चानन-गजानन-

षड़ानन-रूपेषु बहुषु आननेषु अन्नदानासमर्थ इति भावः। एतेन अन्नपूर्णाप्रभावात् शिवगृहमपि अन्नपूर्णं जातमिति अन्वर्थनामा सा देवीत्युक्तं भवति।

(२८) यत्र यस्मिन् कर्मणिष्ठाने भोगः ऐहिकं सुखं भवतीति शेषः, तत्र मोक्षो न परस्परविरुद्धधर्म्मत्वात्।

(२९) जन्तुजठरस्थिता त्वं जठरवासक्लेशं जानासीति त्वां याचते इत्यर्थः।

(३०) काकः—काकवत् तुच्छः। भागीरथीतीरे शाकलाभः इन्द्रत्वलाभादपि सुखकर इति भावः। पाकशासनः—इन्द्रः।

(३१) अथ वचनभङ्ग्या गङ्गायाः पापनाशिनीं शक्तिमाह यदेति। पापानि—जाह्नवीगामिभिर्नरैः कृतानीति शेषः। वदन्ति—जाह्नवीगामिनो नरानिति शेषः। अप्रियम्—वक्ष्यमाणं श्रुतिकटु वचनम्। कृतघ्नाः—कृतानि प्राक्सम्पादितानि पापकर्म्माणि घ्नन्ति जाह्नवीसेवया विनाशयन्ति ये ते कृतघ्नास्तत्सम्बोधने, हन्तेष्टक् प्रत्ययः। नितरां—भृशं। समुत्पाद्य—जनयित्वा। स्वयमुत्पाद्य स्वयमेव हननस्य अयौक्तिकत्वात्। तथाच—"विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतमि"ति कुमारे।

(३३) रघुवंशस्य प्रथमश्लोकस्यानुरूपः श्लोको वाणीति। वाणी वाक्यम् अर्थः अभिधेयः, संयुक्तौ नित्यसम्बद्धौ, प्रतिपत्तये सम्यग्ज्ञानाय, जनकौ मातापितरौ, शर्वाणी पार्वती, शशिशेखरः शिवः। अहं वागर्थाविव संयुक्तौ जगतो जनकौ शर्वाणीशशिशेखरौ वन्दे इत्यन्वयः। वाक्यार्थौ यथा नित्यसम्बद्धौ पार्व्वतीपरमेश्वरौ अपि तथा —अर्द्धनारीश्वरमूर्त्तौ एकं परित्यज्य अपरस्य क्षणमप्यनवस्थानात्। अतएव वाक्यार्थयोः सम्यग्ज्ञानलाभाय तयोरेवाराधनमुचितमिति भावः। यतस्तौ जगतो मातापितरौ अतो वन्दे। एतेन तयोराराधने कारणान्तरमपि दर्शितम्।

(३४) रामस्य ईश्वर इति षष्ठीतत्पुरुष इति रामस्योत्तरम्। राम एव ईश्वरो यस्येति बहुव्रीहिरिति शिवस्योत्तरम्। राम एव ईश्वर इति कर्म्मधारय इति ब्रह्मण उत्तरम्। षष्ठीतत्पुरुषं वदता रामेण स्वापेक्षया शिवस्य गौरवं ज्ञापितम्। बहुव्रीहिं स्वीकुर्व्वता शिवेन तद्विपरीतं कृतम्। अथ ब्रह्मा कर्म्मधारयेण रामशिवयोरभेदं बोधितवान्।

(३६) विन्देत्—लभेत। राजनि दुष्टानां शासितरि सति भार्य्यां धनञ्च लभेत। अन्यथा प्रबलैरपहार्य्यत्वात् इति भावः।

(३७) सारगर्भैः—सारवद्भिः, पक्षे निखिलकार्य्याणां सारभूतं तत्त्वं जानद्भिः। अकुटिलैः—सरलैः, पक्षे कुटिलतादोषरहितैः। अच्छिद्रैः—नीरन्ध्रैः, पक्षे दोषशून्यैः। सुपरीक्षितैः—कृतगुणदोषविचारैः, उभयत्र तुल्यमेतत्। धार्य्यते—रक्ष्यते।

(३८) सेकेन्दरः—आकबरापरनामधेयो भारतसम्राट्, पुरन्दरः इन्द्रः, एतौ

विधिना तुलितौ—गुरुलाघवपरिज्ञानाय तुलादण्डे स्थापितौ। सेकेन्दरस्य धराधिपत्यं इन्द्रस्य च स्वर्गाधिपत्यं गुरुलाघवमूलकमेवेति भावः।

(३९) आदित्यस्य तव विलोकनजनितेन खेदेन, धर्म्मवारिणा मम भालस्थितानि विधिलिखितानि दुःखसूचकाक्षराणि नश्यन्तु, भवदीयकृपावलोकनेन मम दुःखानि दूरीभवन्तु इति भावः।

(४०) निष्कलङ्कः—निर्द्दोषः, पक्षे कलङ्क। निरातङ्कः—निर्भयः, पक्षे राहुग्रासाद् भीतः। पद्मिनीप्राणवल्लभः—पद्मिनी सुन्दरस्त्रीविशेषः। राजमहिषी च तल्लक्षणोपेता।

(४१) विधातृवशेन—दैवाधीनतया। मनागपि—ईषदपि। खलसि—भ्रष्टो भवसि। खसदृशकिञ्चिद्गुणवतो निकृष्टस्य तद्गुणपराभवाय उत्कृष्टेन कदापि न चेष्टितव्यमिति भावः।

(४२) विषमम् उन्नतावनतं संस्थानं अवयवसन्निवेशो यस्य तादृशं वपुः। करभस्य—उष्ट्रशावकस्य।

(४३) मोहः—मूढ़ता। वराकस्य—नीचस्य। सरीसर्त्ति—मुहुरितस्ततो गच्छति, नरीनर्त्ति—पुनःपुनः नृत्यति। तस्य ससङ्कोचमवस्थानमेव युक्तमिति भावः।

(४४) तुल्यवर्णौ—समानवर्णौ छदौ पक्षौ यस्य तादृशः। सङ्गतः—एकत्रावस्थितः।

(४५) कालिमा—कृष्णत्वम्। काकलीकोविदाः—अव्यक्तसूक्ष्ममधुरध्वनिः काकली तस्या रसज्ञाः। पुनः—किन्तु।

(४६) रसालः—आम्रवृक्षः। पतत्त्रिणः—पक्षिणः। तन्मञ्जरीरसास्वादं—तस्य रसालस्य मञ्जरी अभिनवक्षुद्रपल्लवः तस्य रसास्वादनम्। कुहूमुखाः—कोकिलाः।

(४७) ज्योतिरिङ्गणः—खद्योतः, "जोनाकी" इति भाषा।

(४८) खरः—गर्द्दभः। खरस्वरतया—कर्णपीड़कतीक्ष्णस्वरवत्त्वेन हेतुना। अवरैः—नीचैः।

(४९) पुरन्दरम्, इन्द्रं प्रार्थयते याचते पिपासोपशमनाय जलमिति शेषः। असति प्रार्थनापूरणे पिपासया म्रियते, म्रियमाणोऽप्यन्यं न प्रार्थयते इत्यर्थः।

(५१) विद्याचारित्रादिगुणैरसम्पन्नस्य तावदेव वावदूकता न यावत् महतामुदयः।

(५२) दलानाञ्च—पत्राणाञ्च। विवेकिनः—विवेचकाः। मकरन्दः—मधु।

(५३) मत्स्यरङ्ग—मत्स्यदरिद्रपक्षिविशेष। 'माछराङा' इति भाषा। "मत्स्यरङ्गो मत्स्यरङ्कः झम्पाशी च समौ चकः"—शब्दरत्नावली। निरातङ्कः—निर्भयः। लवणाम्भसि लवणमिश्रं अम्भो यस्य तस्मिन् समुद्रे मज्जसि हिंस्रजलचरसङ्कुलोऽयं समुद्र इत्यविमृश्यैव मग्नो भवसि। जाठरी—उदरसम्बन्धिनी।

(५४) व्यजनैः - तालवृन्तैः। आतपत्रैः—छत्रैः। कलापिनां पिच्छैः—मयूरपुच्छैः। पदभ्रष्टैः—स्थानच्युतैः।

(५५) चरन्ति—भक्षयन्ति। अपरिग्रहाणि—नास्ति परिग्रहः अन्यस्य स्वीकारो येषां तानि, अस्वामिकानि निर्झरतोयादीनीत्यर्थः। आराधयितुं—तोषयितुम्।

(५७) विकारी—चापल्यादिविकारविशिष्टः। शफरी—क्षुद्रमत्स्यविशेषः, 'पुँठी-माछ' इति भाषा। फर्फरायते—फर्फरः गर्व्वभरेण अङ्गभङ्ग्या सञ्चरणशीलः, स इव आचरति।

(५९) दक्षकाः—दक्षा एव दक्षकाः, स्वार्थे क-प्रत्ययः।

(६०) सदेत्यादि—निरन्तरप्रचुरमदस्राविहस्तिमांसभोजनशीलः। अकृतम् असम्पादितम् अभीष्टं भक्ष्यं येन सः।

(६१) कंसारिर्विष्णुः तस्य चरणोद्भूता या सिन्धुर्नदी गङ्गेति यावत् तस्याः कल्लोलेन महातरङ्गेण लालितं पोषितं ते मनः कुल्यानां क्षुद्रकृत्रिमसरितां नीरे जले न रमते नानुरज्यते।

(६२) नीरक्षीरविभागी—नीरमिश्रक्षीरविभागी, नीरं विहाय क्षीरपानरूपे कर्म्मणि हंस एव समर्थो बकस्तु नेति।

(६३) परार्थाय—परेषां प्रयोजनं साधयितुं। साधुजनाय स्वयं दुःखमनुभूय परेषां सुखमुत्पादयन्ति। तेषाञ्च सम्पदमपरे परिगृह्य भुञ्जते इति परस्परसादृश्यमवगम्यमिति।

(६४) महीरुहाः—वृक्षाः। अर्थिनः—याचकाः।

(६५) विश्रान्ताः शशकाः येषु ते। शाखी—वृक्षः। शाम्यति—विश्रामसुखं लभते। कुञ्जरः—हस्ती।

(६६) अर्कवृक्षः—'आकन्द' इति ख्यातो वृक्षविशेषः। वर्षासु अर्कवृक्षाणां पत्रापगमो भवतीति प्रसिद्धिः।

(६७) अरिष्टानि - दुरदृष्टानि अशुभानि वा। किम्—अनेयषां पादपाणां वर्द्धनं सेवनञ्च निरर्थकमिति भावः।

(७०) नः अस्मभ्यं रोचन्ते। "रुच्यर्थानां प्रीयमाणः" इति चतुर्थी। गुणत्वं सूत्रात्मकं, प्रशंसनीयमित्यपि व्यज्यते। गुह्यं—शिश्नादि। महात्मानोऽपि गुणमजन्मानः परेषां गुह्यगोपनञ्च कुर्व्वन्ति, अतस्तत्सादृश्यमेषामिति।

(७४) खरतापैः—प्रखरसूर्य्यकिरणैः। अजाद्यैः—छागलादिभिः।

(७५) दासेरकस्य—उष्ट्रस्य। दासी—प्रीतिकरी। एतावतैव—वदर्य्यरुचिकरत्वेनैव।

(७६) प्रथमवयसि—शैशवदशायाम्। पादे—मूलदेशे।

(७८) इतीव—अस्मात् कारणादिव। उद्वेगः—विकारः।

(७९) पनसस्य इदं पानसं कण्टकिफलवीजम् अस्ति चेत् व्यञ्जनैः सूपादिभिः किं प्रयोजनम् ।

(८१) कार्य्यज्ञः—कर्त्तव्यावधारणपटुः । अवति—रक्षति । पूरः—प्रवाहः ।

(८२) एकस्यां भुवि चेवे रोहत उत्पद्येते यौ तयोः । एकं समानरूपं दलं ययोः । एककाण्डयोः—समानरूपगुच्छयोः । शालिश्यामाकयोः—हैमन्तिकधान्य-श्यामाकधान्ययोः ।

(८३) हेमगिरिणा—सुमेरुणा । रजताद्रिणा—हिमालयपर्व्वतेन । मन्यामहे—प्रशंसामः । शाखोटः—वृक्षविशेषः, 'सिओढ़ा' इति भाषा । कुटजः—'कुरचि' इति भाषा ।

(८५) मथितः—मथि धातु + क्त ( कर्म्मणि वाच्ये ) मथितादिचतुर्णां देवासुरैः, हनूमता, कपिभिः, अगस्त्येनेति कर्त्तृपदचतुष्टयं क्रमादूहनीयम् । जड़ात्मानः—जड़स्वभावाः, पचे डलयोरभेदात् जलात्मानं इत्यपि । निस्त्रपाः—नास्ति त्रपा लज्जा येषां ते ।

(८६) अधः—नीचं । मूर्ध्नि—शिरसि । रत्नं रत्नं तृणं तृणमित्यत्र पूर्व्वरत्न-तृणयोरुद्देश्यता, परयोर्विधेयता । अतोऽर्थभेदाभासात् न द्विरुक्तिदोषः । तवैतदा-चरणेन रत्नानामपकर्षं तृणानाञ्चोत्कर्षं न कोऽपि ज्ञास्यति, प्रत्युत तवैव दोषं कीर्त्त-यिष्यतीति भावः । धारयसे इति धृञ्‌ स्थितावित्यकर्म्मकस्य धृधातोर्णिजन्तरूपम् ।

(८७) कूपिकाम्—क्षुद्रकूपम् ।

(८८) हा—खेदे । हेम—स्वर्णम् । दहनोदरे—दहनस्य अग्नेरुदरे मध्ये । शकलं—खण्डम् ।

(८९) गुञ्जया—गुञ्जा, 'कुँच' इति भाषा, तया ।

(९१) अनन्ताया आशाया पूरणासम्भवात् परिहार एव श्रेयानिति भावः ।

(९४) तेन काव्येन—प्रसादगुणवता सरलकाव्येन । काण्डेन—वाणेन । धन्विनः—धनुर्धारिणः । न घूर्णयति—न व्याकुलीकरोति ।

(९५) अन्यसन्निधेः—अन्येषां सन्निधिः समीपस्थानं तस्मात्, हेतौ पञ्चमी ।

(९७) तुम्बीफलम्—अलाबु । प्लवते—सन्तरति, गुरुत्वाभावान्न निमज्ज-तीत्यर्थः ।

(९८) पर्व्वता भारा अपि न तादृशा भारा इत्यर्थः । तथा—महाभारा इत्यर्थः ।

(१००) दष्टसत्त्वस्यैव जीवननाशनियमः, खलस्तु एकं दशति अपरं विनाशयति, अत इयं व्याली ( सर्पी ) अपूर्वा अपरव्यालीभ्यो विलक्षणेत्यर्थः ।

(१०१) न विप्रपादोदकपङ्किलानि—येषु गृहेषु ज्ञानोपदेशकपूज्यपादब्राह्मणानां

पादप्रचाखनं न भवति, यानि गृहाणि तेषां गतायातरहितानीत्यर्थः। स्वाहा च स्वधा च तयोः कारः करणं तेन विवर्ज्जितानि, दैवपैत्रक्रियाकाण्डशून्यानीत्यर्थः।

(१०४) जानु श्राश्रयणीयमिति शेषः।

(१०७) भक्तो अनुरक्ते जने द्वेषः विरागः, पक्षे भक्ते अन्ने। जड़े मूर्खे प्रीतिरासक्तिः, पक्षे डलयोरैकत्वात् जडे जले प्रीतिः तत्पानेच्छा। अरुचिः खाद्यद्रव्ये विरागः, लोकेषु अननुरागः। ज्वरिणाम् अन्नद्वेषः जलपिपासा च स्वतःसिद्धा। गुरुलङ्घनं महतामतिक्रमः, धनिनामेतत् स्वाभाविकं ; ज्वरिणान्तु गुरुलङ्घनं महत् लङ्घनं दीर्घोपवासः गुरुपाकद्रव्यवर्ज्जनं वा न्याय्यमेव। मुखे च नित्यं सर्व्वदा कटुता कठोरभाषित्वं, ज्वरिणां तु कटुरसवत्ता, अतएव उभयोरेकरूपता।

(१०९) सौम्येन—शान्तमूर्त्तिना। कष्टः—क्लेशकरः।

(११०) काकः कुत्रचित् किञ्चिद्भक्ष्यमासाद्य शब्दायते, तस्य शब्दैरन्येऽपि काकास्तत्रोपगच्छन्तीति प्रसिद्धिः।

(१११) असौ याचकः वायुना न नीयते तूलापेक्षया अस्य लघुत्वेऽपि स्थानात् स्थानान्तरं न प्राप्यते। कुत इत्याह स्वत इति। संसर्गमात्रेणैव यदि मां याचेत इति भयादेव।

(११२) वैकल्यम्—मानसं विकलभावम्। धरणीपातम्—पृथिवीपृष्ठे पतनम्। अयथोचितजल्पनम्—युक्तिविरुद्धं वाक्यम्। सन्निपातस्य—त्रिदोषात्मकस्य रोग-विशेषस्य। चिह्नानि लक्षणानि।

(११४) मुख्या—श्रेष्ठा। गीर्व्वाणभारती—देवभाषा, संस्कृतभाषा इति यावत्।

(१२३) मदो मत्तता हिताहितविवेकशून्यत्वमिति यावत्। नामसाम्यात्—सुवर्णस्य नाम्नः सादृश्यात्, "धुस्तूरः कनकाऽह्वय" इत्यमरात्। धुस्तूरफलं मत्ततां जनयतीति लोकप्रसिद्धमेव।

(१२६) क्ष्वेड़ं—विषम्। ईश्वरः—शिवः। ईश्वरः शिवो यथा इन्दुक्ष्वेड़ौ चन्द्रं विषञ्च गृह्णन् पूर्वम् इन्दुं शिरसा श्लाघते शिरसि धृत्वा प्रशंसति, परं विषं कण्ठे सुरक्षति, तथा गुणी गुणदोषौ अन्येषामिति शेषः, गृह्णन् जानन् पूर्व्वं गुणं शिरसा श्लाघते शिर उन्नमय्य प्रशंसतीत्यर्थः, परं दोषं कण्ठे सुरक्षति, गोपायति नान्यस्य कस्यचित् ब्रवीतीत्यर्थः?

(१२७) एते येन येन कर्मणा परोपकारं कुर्व्वन्ति, तैः कर्मभिरेतेषां नु कश्चित् स्वोपकारोऽस्तीति।

(१२८) गतव्रीड़ं—निर्लज्जं। जटिलं—चूड़ाकरणात् प्राक् केशच्छेदनाभावात् जटावन्तम्। आत्मजं—शिशुसुतम्।

(१३१) कर्द्दमितं स्थानं रवितेजसा शुष्कं सत् विदीर्णं भवति।

(१३२) वराकोदरपूरणे—तुच्छजठरभरणे।

(१३३) यन्ता—सारथिः। विकलः—अनूरुः अरुण इत्यर्थः। विषमाः—अयुग्माः सप्तसंख्यकाः, दुर्द्दान्ता इत्यपि।

(१३४) उदारस्य—दानशीलस्य। शूरस्य—वीरस्य। विरक्तस्य—वैराग्ययुक्तस्य। निस्पृहस्य—सर्व्वथा स्पृहाशून्यस्य ब्रह्मानन्दमनुभवत इति यावत्। सर्व्वत्र तृणं तृणवत् तुच्छं भवतीत्यर्थः।

(१३५) सीदति—अवसादमाप्नोति। एकः—एकाकी। अनर्घम्—अमूल्यम्। हेमाश्रयं—स्वर्णसाहाय्यम्।

(१३६) निसर्गेण—स्वभावेन विशुद्धः निर्म्मलः आत्मा यस्य तादृशः सुजनः, व्यजनस्य उपमा सादृश्यं यस्य सः, परेषां सन्तापस्य दुःखस्य पक्षे उत्तापस्य शान्तिरेव अर्थः प्रयोजनं यस्मिन् तद् यथा तथा परिभ्रमति कार्य्यव्यापृतो वर्त्तते। व्यजनपक्षे घूर्णते।

(१३७) स्वपिति—योग्यपुत्रे भारं विन्यस्य निद्राति। सत्स्वपि दशसु पुत्रेषु भारवहनक्लेशो गर्द्दभीं न मुञ्चति।

(१४३) सर्व्वं वस्तु! वैपरीत्याय कल्पते विपरीतगुणं भवति। दग्धेत्यादि—वह्निदाहप्रशमनकारीण्यपि सलिलान्यपि तेषां वह्निदाहं जनयन्तीति।

(१४४) धनदे—कुवेरे। चर्म्माम्बरधरः—शार्द्दूलचर्म्मरूपवस्त्रपरिधायी।

(१४५) अजन्मनि—अपुनरावृत्तिविषये, मोक्षार्थमिति यावत्।

(१४८) द्वे चक्षुषी, द्वौ कर्णौ, द्वे नासिके, सुखं, पायुः, उपस्थश्च एतानि नव-द्वाराणि। असवः प्राणा एव विहङ्गमः।

(१४९) मत्कुणः—छारपोका इति भाषा।

(१५१) कस्तूरी—मृगनाभिः। पामरैः—मूढैः अगुणज्ञैरिति यावत्। अलं—व्यर्थम्; "अलं व्यर्थसमर्थयोः इत्यमरः।

(१५२) स्तोकेन—अल्पेन। तुलाकोटेः—तुलादण्डाग्रस्य।

(१५३) धनिनां—वसनभूषणादिभिस्तांस्तोषयन्ति। विशिष्टपरिच्छदा हि सभाया-माद्रियन्ते। अभ्यागतः—अतिथिः। गोभिरिति करणे तृतीया। जितः गृहस्थेनेति शेषः, दधिदुग्धादीनां सुलभत्वादिति भावः। कृषिभिः—कर्षकैः। कर्षका हि प्रायो ग्रासाच्छादनदुःखं नानुभवन्तीत्यर्थः।

(१५४) चणशः—चणेन चणेन। कणशः—कणेन कणेन। सञ्चयेदिति भावादिकस्य चि-धातो रूपम्।

---

# उद्भट-सागरः

## द्वितीय-प्रवाहः ।

### विषय-सूची ।

| विषयः | | श्लोकाङ्काः |
|---|---|---|

विषयः                                                  श्लोकाङ्कः

| विषयः | | | श्लोकाङ्काः |
|---|---|---|---|
| कर्म्मफलम् | ... | ... | २३० |
| कालचरित्रम् | ... | ... | २३१ |
| दैवबलम् | ... | ... | २३२ |
| प्रार्थना | ... | ... | २३३ |
| विवेकः | ... | ... | २३४-२३५ |
| विषय-निन्दा | ... | ... | २३६ |
| (ञ) हास्य-रसः | ... | ... | २३७ |
| विविध-तरङ्गः | ... | ... | २३८-२६० |
| आय-व्ययौ | ... | ... | २३८ |
| उपनेत्रम् | ... | ... | २३९ |
| कण्टकः | ... | ... | २४० |
| कस्तूरी | ... | ... | २४१ |
| कुम्भः | ... | ... | २४२ |
| गोपीयन्त्रम् | ... | ... | २४३ |
| घटिका-यन्त्रम् | ... | ... | २४४ |
| जिह्वा | ... | ... | २४५ |
| तमाखुः | ... | ... | २४६ |
| तुलादण्डः | ... | ... | २४७ |
| दुग्धम् | ... | ... | २४८ |
| धनुर्वाणौ | ... | ... | २४९ |
| धूमः | ... | ... | २५० |
| नखरञ्जनी | ... | ... | २५१ |
| नस्यम् | ... | ... | २५२ |
| नौका | ... | ... | २५३ |
| प्रदीपः | ... | ... | २५४ |
| वड़िशदण्डः | ... | ... | २५५ |
| मध्यस्थः | ... | ... | २५६ |
| विधि-विडम्बनम् | ... | ... | २५७ |
| विवाह-पणः | ... | ... | २५८ |
| सुजन-दुर्जन-पार्थक्यम् | ... | ... | २५९ |
| स्वभावाख्यानम् | ... | ... | २६० |
| परिशिष्टम् ( टिप्पनी ) | ... | २६० श्लोकात् परम् | |

# उद्भट-सागरः ।

## द्वितीय-प्रवाहः ।

## श्लोक-सूची ।

| श्लोकाद्यांशः | श्लोकाङ्कः |
|---|---|
| **( ज )** | |
| जगत्प्राणो हरेत् प्राणान् | ... १२६ |
| जलस्य वह्निना वैरं विधात्रा | ... २५६ |
| जातोऽहं जनको मयैव जननी | ... २२८ |
| ज्वालातरि क्षणसर्पे पावके | ... १६२ |
| जायमानो हरेद् दारान् | ... १८२ |
| जीवनं सुखदं यत्र मरणञ्च | ... ६४ |
| ज्ञानं वर्द्धयति श्रियं वितनुते | ... २२५ |
| **( त )** | |
| तन्मायायां परमां मन्ये | ... २३५ |
| तव करकमलस्थां | ... ३ |
| तवैव शरणागतं भवदधीन | ... १३५ |
| तातज्ञया तात वनं | ... २० |
| तालीतरोरनुपकारि | ... १२१ |
| तिमिरारिस्तमो हन्ति | ... ९१ |
| तीरेऽस्मिन् शफरीं गिलन्ननुदिनं | ... १०० |
| तुरगशतसहस्रं गोगणानाञ्च | ... १९६ |
| तृणे क्षणेऽपि ते शक्तिः | ... १४७ |
| तृणैवास्ति मनुष्याणाम् | ... १४८ |
| त्यक्तं जन्मवनं तृणाङ्कुरवती | ... ११५ |
| **( द )** | |
| दग्धं खाण्डवमर्ज्जुनेन बलिना | ... १६८ |
| दानार्थिनो मधुकरा यदि | ... ११६ |
| दिव्यं चूतरसं पीत्वा | ... १०१ |
| दिशि दिशि विलसन्तः | ... १४५ |
| दुःखेनोपार्ज्जिते धर्म्मः | ... १९९ |
| दुन्दुभिश्च सुतरामचेतन | ... १९८ |
| दुर्योधनः सकर्णोऽपि | ... ८९ |
| दूरे कान्ताकरं वीक्ष्य | ... १६७ |
| दृढतरगलविनिबद्धः | ... २४२ |
| दृश्यतेऽणुर्महत्त्वेन महानणुतया | ... २३९ |
| देहस्नेहो यदि तव | ... ६२ |
| दोषाकरः शिरसि भाति | ... ४१ |
| दोहः प्रायो न भवति गवां | ... ३१ |
| द्वाविंशद्दशनेऽपि | ... २४५ |
| द्वारं खड्गिभिरावृतं | ... ९० |
| द्विगुरपि सद्वन्द्वोऽहं गृहे च मे | ... १६४ |
| **( ध )** | |
| धन्येयं धरणी ततोऽपि मथुरा | ... ३२ |
| धरित्रि पुष्पाञ्जलिरेष | ... १२० |
| धूमः पयोधरपदं कथमप्य | ... २५० |
| ध्वान्तौघः कवलीकरोति | ... १४६ |
| **( न )** | |
| न कालिन्दीनीरं नवजलधरं | ... २२ |
| न चौरहार्य्यं न च राजहार्य्यं | ... २१२ |
| नन्दगोपगृहपश्चवीथिका | ... ७२ |
| नभसि निरवलम्बे सीदता | ... १३६ |
| नवीनघनसुन्दरे विमलहेम | ... २७ |
| नवीनदीनभावस्य याचमानस्य (क) | १८६ |
| नवीनदीनभावस्य याचमानस्य (ख) | १७६ |
| नव्यं भूसुरसूरिसेवितमलं | ... २५२ |
| नाथे कृतपदघात | ... ९ |

# उद्भट-सागरः

## द्वितीय-प्रवाहः ।

### देवता-तरङ्गः ।

#### परब्रह्म ।

( १ )

वैद्यं व्याधिविषाकुलो धनपतिं दारिद्र्यदुष्टो जनः
खाद्यञ्च क्षुधितो हिमाम्बु तृषितश्छायातरुं तापितः ।
शोकार्त्तः स्वजनं वियोगविधुरो वत्सो यथा मातरं
तद्वत् तत् सततं स्मरामि परमं ब्रह्माभिधेयं महः ॥

( उद्भटसागरस्य )

---

#### ब्रह्मा ।

( २ )

कुलशैलदलं पूर्णं सुवर्णगिरिकर्णिकम् ।
नमोऽधितिष्ठतेऽनन्तनालं कमलविष्टरम् ॥

( जगद्धरस्य )

---

## सरस्वती ।

( ३ )

तव करकमलस्थां स्फाटिकीमक्षमालां
तलकिरणविमिश्रां दाड़िमीबीजबुद्ध्या ।
प्रतिपलमनुकर्षन् येन कीरो निषिद्धः
स भवतु मम भूत्यै वाणि ते मन्दहासः ॥

( कमलाकरस्य )

( ४ )

श्वश्रूं विना वृत्तिरिह स्वतन्त्रा
प्रायः स्नुषाणामपवादहेतुः ।
यद्वाणि लोके रमया विहीनां
सतीमपि त्वामसतीं वदन्ति ॥

---

## विष्णुः ।

( ५ )

स पातु श्रीपतिर्यस्मानलक्ष्मीश्च पलायते ।
यन्नामस्मरणाच्चापि न लक्ष्मीश्चपलायते ॥

( उद्भटसागरस्य )

( ६ )

खरतरशरहतसुरपरमथन
खगचर नगधर फणधरशयन ।
परपदलयकर भवदरशमन
जगदघमपहर सरसिजनयन ॥

( ७ )

सर्व्वस्वदं बलिमधो नयसि च्छलेन
प्राणाधिकां जनकजां विपिने जहासि ।
उत्पाद्य यादवकुलं स्वयमेव हंसि
कस्त्वां भजेत यदि कालभयं नु न स्यात् ॥

---

## लक्ष्मीः ।

( ८ )

यत्राभ्यागतदानमानचरणप्रक्षालनाश्रमनं
सत्सेवा पितृदेवतार्च्चनविधिः सत्यं गवां पालनम् ।
धान्यानामपि संग्रहो न कलहश्चित्तानुरूपा प्रिया
तत्राहं निवसामि नित्यमचलेत्यूचे श्रिया श्रीपतिः ॥

---

## लक्ष्मी-चरित्रम् ।

( ९ )

लक्ष्मीः कथं ब्राह्मणेभ्यः कुप्यतीत्याह :—

नाथे कृतपदघात-
सुलुकिततातः सपत्निकाखेवी ।
इति दोषादिव रोषाद्
माधवयोषा द्विजं त्यजति ॥

( १० )

अन्यच :—

आघातो भृगुणा कृतो निजपतेः पादेन विष्णोरुर-
स्यम्भोधिं किल कुम्भसम्भवमुनिस्तातं निजं पीतवान् ।
उच्छिन्दन्ति निजं प्रियं शतदलं वासस्थलं ब्राह्मणा
इत्थं दुर्नयतो भवत्यकरुणा पद्मालया तान् प्रति ॥

( ११ )

लक्ष्मीदेव्या आगमने गमने च गृहस्थानामवस्थाभेदं वर्णयति :—

यावदेव कमला कृपान्विता
तावदेव भवनं वधूः सुखम् ।
पौरुषान्वितततनुर्जनादरो
नास्ति चेत् प्रथमवर्णवर्जितम् ॥

( कृष्णजीवन न्यायालङ्कारस्य )

( १२ )

निर्धना हि पण्डिताः मूर्खास्तु कथं न तथेति प्रश्नः लक्ष्म्या उत्तरञ्च :—

मूर्खाय द्रविणं ददासि कमले विद्वत्सु किं मत्सरो
नाहं मत्सरिणी बुधेषु न च मे मूर्खे रतिर्विद्यते ।
मूर्खेभ्यो द्रविणं ददामि यदहो तत्कारणं श्रूयतां
विद्वान् सर्वगुणैर्विभूषिततनुर्मूर्खस्य नान्या गतिः ॥

---

## अनन्तः ।

( १३ )

अनन्तदेवं भूकम्पनिवारणार्थमर्थयते :—

युक्तोऽसि भुवनभारे
मा वक्रां वितनु कन्धरां शेष ।
त्वय्येकस्मिन् दुःखिनि
सुखितानि भवन्ति भुवनानि ॥

---

## रामचन्द्रः ।

( १४ )

वामे भागे जनकतनया राजते यस्य नित्यं
भ्रातृप्रेमप्रवणहृदयो लक्ष्मणो दक्षिणे च ।
पादाम्भोजे पवनतनयः श्रीमुखे बद्धनेत्रः
साक्षात् ब्रह्म प्रणतवरदं रामचन्द्रं तमीडे ॥

( उद्भटसागरस्य )

( १५ )

सर्व्वासु विभक्तिषु रामशब्दस्य रूपं दर्शयन् श्लोकं रचयति :—

रामो राजमणिः सदा विजयते रामं रमेशं भजे
रामेणाभिहता निशाचरचमू रामाय तस्मै नमः ।
रामान्नास्ति शुभायनं परतरं रामस्य दासोऽस्म्यहं
रामे चित्तलयः सदा भवतु मे भो राम मामुद्धर ॥

( १६ )

अहल्यां मानुषीकृत्य गच्छन्तं नदीतरणकाले नावमारुरुक्षुं रामं प्रति नाविकस्योक्तिरियम् :—

मानुषीकरणरेणुरस्ति ते
पादयोरिति कथा प्रथीयसी ।
क्षालयामि तव पादपङ्कजे
नाथ दारुदृषदस्य का भिदा ॥

---

## सीता ।

( १७ )

वनगमनकाले श्रीरामचन्द्रस्य सकरुणोक्तिरियम् :—

पृथ्वि त्वं भव कोमला दिनमणे त्वं शैत्यमङ्गीकुरु
त्वं वर्त्मन् लघुतां प्रयाहि पवन त्वं खेदमुत्सारय ।
सान्निध्यं श्रय दण्डकावन गिरे त्वं गच्छ मार्गाद् बहिः
सीताऽसौ विपिनं मया सह यतो गन्तुं समुत्कण्ठते ॥

( १८ )

लङ्कावस्थानकाले कयाचित् राक्षस्या स्वपरिचयं पृष्टा सीता नाहं पापीयसी तेषां नामग्रहणेऽपि शक्तेति मन्यमाना इदमाह :—

स्वरोचिषा कमलमलङ्करोति य-
स्तदन्वये द्विशरथताङ्क एकराट् ।
तदात्मजौ विपिनचरौ तयो रमां
यमाह च स्वरविगमेऽस्मि तद्वधूः ॥

( १९ )

मायामृगं निहत्य पर्णशालामागतो रामचन्द्रः सीतामपश्यन् यदि नाम परिहास-च्छलेन क्वापि लुक्कायिता भवेदिति विचिन्त्य सीतामुद्दिश्याह :—

वितर वितर वाचं कुत्र सीते गता त्वं
परिहर परिहासं सर्वथा दुःसहं मे ।
त्वमसि खलु तनूजा हन्त सर्वंसहायाः
सुतविरहविमुक्तप्राणराजात्मजोऽहम् ॥

---

## कौशल्या ।

( २० )

वनगमनकाले रामं प्रति कौशल्योक्तिरियम् :—

ताताज्ञया तात वनं प्रयाहि
व्याजेन बाल क्षणमत्र तिष्ठ ।
पन्थानमावेदयितुं मदीयाः
प्राणा बहिर्भूय पुरःसरन्तु ॥

---

## कृष्णः ।

( २१ )

यां मत्वा यमुनेति तट्परिगतो व्यूहो गवां गाहते
विद्युत्वानिति नीलकण्ठनिवहो यां द्रष्टुमुत्कण्ठते ।
उत्तंसाय तमालपत्रमिति संगृह्णन्ति यां गोपिकाः
कान्तिः कालियशासनस्य वपुषः सा पावनी पातु वः ॥

( २२ )

विधीयते यद् यदुनन्दनेन
नापेक्ष्यते तत्र सहायशक्तिः ।
पाञ्चालबालाञ्चलदीर्घता या
न तत्र तन्तुर्न च तन्तुवायः ॥

( २३ )

स्यात् कृष्णनामचरितादिसिताऽप्यविद्या-
पित्तोपतप्तरसनस्य न रोचिकैव ।
किन्त्वादरादनुदिनं खलु सैव सेव्या
स्वाद्वी भवेदपि च तन्नदमूलहन्त्री ॥

( २४ )

हरिचरणसाश्रितानां शत्रुभावो नास्त्येव इत्याह :—

अरुणोपरि विधुपाली
तदुभयपार्श्वे तमःस्तोमः ।
हरिपदभजनगुणोऽयं
शात्रवमात्रं न कुत्रापि ॥

( २५ )

काचित् अभिज्ञा गोपी कृष्णं प्रत्याह :—

पथि धावन्निह पतितो
रोदिष्यस्त्वाकरावलम्बाय ।
पतितोद्धारणसमये
किं न स्मरसि त्वमात्मानम् ।

( २६ )

भगवत्समीपे भक्तस्य निवेदनमेतत् :—

आनीता नटवन्मया तव पुरः श्रीकृष्ण या भूमिका
व्योमाकाशखखाम्बराब्धिवसवस्त्वत्प्रीतयेऽद्यावधि ।
प्रीतो यद्यसि ताः समीक्ष्य भगवन् तद् वाञ्छितं देहि मे
नो चेद् ब्रूहि कदापि मानय पुनर्मामीदृशीं भूमिकाम् ॥

---

## कृष्णलीला ।

( २७ )

श्रीकृष्णस्य गोपीमनोहरमूर्त्तिधारणमाह :—

नवीनघनसुन्दरे विमलहैमपीताम्बरे
त्रिभङ्गिमकलेवरे मुरलिचुम्बिबिम्बाधरे ।
मनोज्ञरसलम्पटे सखि विलोक्य वंशीवटे
मनो मम निरन्तरं मदनमोहने मज्जतु ॥

( २८ )

श्रीकृष्णस्य चूड़ायाः कथं वासवक्रता इत्याह :—

यद् ध्यायेत् सततं विधिः पदयुगं नाभ्यम्बुजे संस्थितो
गङ्गां यत्पदसम्भवां स्मररिपुर्धत्ते स्वशीर्षे सदा ।
यन्नित्यं कमला च सेव त इदं यत्नेन पादद्वयं
तद् द्रष्टुं कमलापतेः सुकुटिला वामा च चूड़ा चिरम् ॥

( २९ )

समाकुलकुलावलाकुलदुकूलराशिं हरन्
कलिन्दतनयातटे निभृतनीपशाखां श्रयन् ।
स्मितानननसरोरुहे मधुरवेणुमारोपय-
न्नपायदवपावकादवतु कोऽपि गोपीपतिः ॥
( हरिहर शास्त्रिणः )

---

मुरली ।

( ३० )

गुरुजनपरिचर्य्या धैर्य्यगाम्भीर्य्यलज्जा
निजनिजगृहकर्म्म स्वामिनि प्रेमसेवा ।
इति कुलरमणीनां वर्त्म जानन्ति सर्व्वा
मुरमथन समस्तं हंसि वंशीरवेण ॥

---

## कृष्णविरहे गोकुलावस्था ।

( २१ )

कृष्णविरहेण व्रजवासिनां गोपानां गोपाङ्गणानाञ्च अवस्थां वर्णयत उद्धवस्योक्तिरियम् :—

दोहः प्रायो न भवति गवां दोहनश्चेन्न पाकः
चौराणां स्यात् स यदि घटते दुर्लभं तद्दधित्वम् ।
दध्नः सिद्धौ क्व खलु मथनं मन्थने क्वोपयोग-
स्तक्रादीनामिति गतिरभूदद्य गोधुग्गृहेषु ॥

---

## राधिका ।

( २२ )

धन्येयं धरणी ततोऽपि मथुरा तत्रापि वृन्दावनं
तत्रापि व्रजवासभाग्युवतयस्तत्रापि गोपाङ्गनाः ।
तत्राचिन्त्यगुणैकधामपरमानन्दात्मिका राधिका
लावण्याम्बुनिधिस्त्रिलोकरमणीचूडामणी काचन ॥
( भट्टमाधवस्य )

( २३ )

सखीं प्रति राधिकायाः खेदोक्तिरियम् :—

न कालिन्दीनीरं नवजलधरं नीलनलिनं
वयस्यां श्यामाभां पिकमधुकरौ गञ्जनभिया ।
दृशोरग्रे कुर्वे तदपि सखि मर्म्माण्यविरतं
ननान्दुर्दृग्भङ्गी हरि हरि भुजङ्गी दशति मे ॥

---

## यशोदा ।

( ३४ )

यशोदया समा कापि देवता नास्ति भूतले ।
उदूखले यया बद्धो मुक्तिदो मुक्तिमिच्छति ॥

---

## गोपी ।

( ३५ )

यस्य तनूरुहकुहरे
नटनं ब्रह्माण्डकोटीनाम् ।
तमिमं गोपकृशाङ्गी-
लोचनभङ्गी विघूर्णयति ॥

( ३६ )

वृन्दावनं विहाय मथुरामागतं कृष्णं प्रति गोपीनामुक्तिरियम् :—

भक्तिप्रीतिप्रणयसहितं मानदम्भाद्यपेतं
चेतोऽस्माकं गुणवदगुणं गोदुहामङ्गमेतत् ।
विक्रीतं ते युगपदुभयं स्वीकृतं तत् त्वयाद्य
हृद् गृह्णासि त्यजसि च वपुर्नाथ कोऽयं विचारः ॥

---

## बलरामः ।

( ३७ )

कदाचिद् भगवतो जगन्नाथदेवस्य रथयात्रायां सहसा रथात् पतितं बलरामं विलोक्य पुरोराजेन चलद्दिग्गुना 'औत्पातिकम्' इति सभयमुक्तम्। तत्रावस्थितो जगन्नाथतर्कपञ्चाननस्तदाकर्ण्य 'औत्पातिकम्' इत्यस्य वक्ष्यमाणश्लोकेन पूरणं कृतवान् :—

औत्पातिकं तदिह देव विचिन्तनीयं
नारायणो यदि पतेदथवा सुभद्रा ।
कादम्बरीमदविघूर्णितलोचनस्य
युक्तं हि लाङ्गलभृतः पतनं पृथिव्याम् ॥

( जगन्नाथतर्कपञ्चाननस्य )

---

## शिवः ।

( ३८ )

आ मृत्योः सेव्यतामीश आ विश्वादस्ति यः सदा ।
तस्मादाराद् भृशं दुःखं तस्मादाराद् भृशं सुखम् ॥

( उद्भटसागरस्य )

( ३९ )

चन्द्रार्द्धशोभितललाट महामहिम्नः
किं ब्रूम ईश्वर गुणान् गुणसागरस्य ।

त्वन्नामकीर्त्तिपरिकीर्त्तनयत्न एष
पादाब्जरेणुमभिवाञ्छति पूर्णचन्द्रः ॥
( उद्भटसागरस्य )

( ४० )

अनुप्रासमुखेन शिवं स्तौति :—

कल्पान्तक्रूरकेलिः क्रतुकदनकरः कुन्दकर्पूरकान्तिः
क्रीड़न् कैलासकूटे कलितकुमुदिनीकामुकः कान्तकायः ।
कङ्कालक्रीड़नोत्कः कलितकलकलः कालकालीकलत्रः
कालिन्दीकालकण्ठः कलयतु कुशलं कोऽपि कापालिकः कौ ॥

( ४१ )

कश्चित् शिवम् आक्षिप्य कथयति देव तव पारिषदानां मध्ये एतादृशः कोऽपि नास्ति यो मम दुःखं तवान्तिके निवेदयेदिति :—

दोषाकरः शिरसि भाति गले द्विजिह्वः
पाषाणजा सहचरो पशुरन्तरङ्गः ।
दुःखं निवेदयति को भवदन्तिके मे
त्वञ्च त्रिलोचन निमीलितलोचनोऽसि ॥

( ४२ )

भूषा भस्मभुजङ्गमास्थिनिचयः स्थानं श्मशानं प्रियं
त्रैलोक्यापचयोद्यतं विषमपि त्यक्त्वाऽमृतं स्वीकृतम् ।
यत् त्यक्तं सकलैः सुरासुरनरैस्तत्ते प्रियं प्रायश-
स्त्यक्तुं नार्हसि देव मामपि यतस्त्यक्तोऽस्मि सर्वैः प्रभो ॥

( ४३ )

कस्यचित् शैवस्य खेदोक्तिरियम् :—

एतज्जन्मनि वित्तवस्त्वमतुलं जन्मान्तरे शम्भुता
शम्भो सेवनया तवेत्यवधृतं व्यासादिवाक्यैर्मया ।
त्वत्सेवाविधिनैव सम्प्रति गतं जन्मैव न श्रीरभूद्-
देवाज्ञापय पारलौकिककथाऽप्येवं यथार्था नु किम् ॥

---

## शिवलीला ।

( ४४ )

शिवस्य गलदेशे विषस्य चिरस्थितिकारणमाह :—

मृतिरपि भिक्षोः सुकृति-
र्मत्वेति महाविषं समाप्य महेशः ।
तत् तत्कण्ठे तस्थौ
जठरानलहेतिभीतिहेतोः सततम् ॥

( उद्भटसागरस्य )

( ४५ )

शिवस्य चन्द्रकलाधारणकारणं कथयति :—

गङ्गाजलनयनानल-
मिलनादेकत्र नैव कल्याणम् ।
तत् किं धूर्जटिमूर्द्धनि
मध्यस्था वैधवी लेखा ॥

( ४६ )

भूतिविभूषितमपि यं
गायति विद्वानभूतिकत्वेन ।
मृड़मुडुपरिवृढ़चूड़ं
तमनिशमीड़े प्रपन्नोऽहम् ॥
( हरिहर शास्त्रिणः )

( ४७ )

शिवस्य मन्मथदेहत्वकारणमाह :—

काली कान्ता विषननयना सर्वदा युद्धशीला
पुत्रोऽप्येकः करिवरमुखो षन्मुखस्य द्वितीयः ।
भृत्यश्रेष्ठः कपिवरमुखो वाहनं वृद्ध उक्षा
स्मारं स्मारं स्वगृहचरितं मन्मयो विश्वनाथः ॥

( ४८ )

शिवस्य विषपानकारणं कथयति :—

वृद्धोक्षः प्रपलायते प्रतिदिनं सिंहावलोकाद् भिया
पश्यन् मत्तमयूरमन्तिकचरं भूषाभुजङ्गव्रजः ।
कृत्तिं कृन्तति मूषिकोऽपि रजनौ भिक्षान्नमाभक्षयन्
दुःखेनेति दिगम्बरः स्मरहरो हालाहलं पीतवान् ॥

( ४९ )

श्मशानवासिनः शिवस्य गृहस्थाश्रमवासकारणमाह :—

उज्झित्वा दिगम्बरं वरतरं वासो वसानश्चिरं
हित्वा वासरसं पुनः पितृवने कैलासहर्म्याश्रयः ।
त्यक्त्वा भस्म कृताङ्गरागनिचयः श्रीखण्डसारद्रवै-
र्देवेशोऽपि हिमाद्रिजापरिणयं कृत्वा गृहस्थः शिवः ॥

( ५० )

शिवस्य भिक्षाकरणप्रवृत्तेः कारणं कथयति :—

सीमन्तिनी यस्य गृहेऽन्नपूर्णा
त्रिलोकरक्षां कुरुतेऽन्नदानैः ।
भिक्षाचरः सोऽपि कपालपाणि-
र्ललाटलेखो न पुनः प्रयाति ॥

---

## अर्द्धनारीश्वरः ।

( ५१ )

शिवस्य अर्द्धनारीश्वरत्वग्रहणकारणं कथयति :—

गरलपानजनिर्भरसंज्वरं
वपुरवेक्ष्य हरस्य हरप्रिया ।
हिमयितुं हिमभूमिधरात्मजा
किमु तदर्द्धमयी करुणामयी ॥

---

## पार्वती ।

( ५२ )

निर्वाणदानगीर्वाणसर्वगर्वापहारिणि ।
कर्म्मनिर्म्मूलनार्थाय दयस्व विन्ध्यवासिनि ॥
( उद्भटसागरस्य )

( ५३ )

दुर्गानामोच्चारणमहिमानं दर्शयति :—

शूलं शूली चक्रमादाय चक्री
दण्डं दण्डी वज्रमस्त्रञ्च वज्री ।
धावन्त्यग्रे पृष्ठतः पार्श्वतश्च
दुर्गादुर्गावादिनो रक्षणाय ॥

( ५४ )

देव्या लोकविरुद्धं भावं वर्णयन् तस्या एवानुग्रहं याचते भक्तः :—

स्त्रीरूपाऽपि दिगम्बरा त्रिजगतो माताऽपि सद्यौवना
कन्याऽद्रेरपि कोमला त्रिभुवनव्याप्ताऽप्यदृश्या जनैः ।
साध्वी च क्रमते स्वभर्तृहृदयं श्यामा जगन्मोहिनी
चित्रं रूपमवस्थितं भवतु ते मत्सम्पदे सर्वदा ॥

---

## शक्तिलीला ।

( ५५ )

कथं नाम दुर्गा दशभुजेत्युत्प्रेक्षते :—

पशुपतेरखिलेषु सा
युगपदर्पयितुं कुसुमस्रजम् ।
परिणये द्विभुजा हिमशैलजा
दशभुजा किमभूदपि लीलया ॥

( ५६ )

शिवस्य वक्षोदेशे कालीमूर्त्तिधारणस्य कारणं कथयति :—

मातः कालि तवाऽङ्घ्रिफुल्लकमलं कैवल्यदं शीतलं
संन्यस्योरसि कालकूटकवलज्वालापनुत्त्यै हरः ।
कालग्रासविनाशकारिणि करालास्ये महेशप्रिये
संप्राप्याऽतुलनिर्वृतिं किमु भयादद्यापि तन्नोज्झति ॥

( ५७ )

स्वर्गौकसां स्तुतिगिराऽभिनवेन्दुचूड-
वक्षोऽधिरूढचरणा शरणागतानाम् ।
संग्राममुक्तवसना दशनाग्रदष्ट-
नम्रप्रसारिरसनाऽत्रपयेव काली ॥

---

## गङ्गा ।

( ५८ )

याविर्भूता मुरहरपदाच्छम्भोः शिरोराजिनी
या त्रैलोक्ये विहरणपरा कुण्डगां विधेः स्थायिनी ।
या स्वं गर्भे समधिवसतां गर्भाग्निविध्वंसिनी
सा मन्दस्य प्रभवतु ममाऽनन्दाय मन्दाकिनी ॥

( उद्भटसागरस्य )

( ५९ )

गङ्गे तव महिमानं
वक्तुमनीशः फणीशोऽपि ।
वितरसि तत् पदमच्युत-
मच्युतचरणाच्युताऽपि त्वम् ॥

( ६० )

स्थापितमपहरतीयं
मा कुरु विश्वासमेतस्याम् ।
इह हि समर्पितवपुषो
न भवति वपुषः पुनर्लाभः ॥

( ६१ )

निधानं धर्म्माणां किमपि च विधानं नवमुदां
प्रधानं तीर्थानाममलपरिधानं त्रिजगतः ।
समाधानं बुद्धेरथ खलु तिरोधानमधियां
श्रियामाधानं नः परिहरतु तापं तव तनुः ॥

( पण्डितराज जगन्नाथस्य )

( ६२ )

गङ्गाया दर्शनान्मुक्तिरित्याह :—

देहस्नेहो यदि तव सखे मद्वचः पालनीयं
गङ्गां द्रष्टुं कथमपि न तत्सन्निधौ यास्यसि त्वम् ।
मुक्तिव्याघ्री तदुभयतटव्यापिनी चित्ररूपा
तत्रायान्तं ग्रसति न पुनर्देहसम्बन्धगन्धः ॥

---

## हरशिरश्चन्द्रः ।

( ६३ )

शिवशिरसि स्थिता शशिकला कथं क्षीणाऽसीति केनचित् पृष्टा पृच्छन्तं प्रत्याह :—

वासः समं नेत्रहुताशनेन
गर्जन् फणीन्द्रो भयमातनोति ।
किं पृच्छसि त्वं वपुषः कृशत्वं
भागीरथी जीवनमादधाति ॥

---

## काशीधाम-महिमा ।

( ६४ )

(क)

जीवनं सुखदं यत्र मरणञ्च ततोऽधिकम् ।
नौमि तां मुक्तिदां काशीं यत्रास्ते सशिवः शिवः ॥

( उद्भटसागरस्य )

(ख)

लोलार्ककेशवौ कोटी गङ्गा ज्या नगरं धनुः ।
कलिलक्ष्यं शरो धर्मः शिवो धन्वी करोतु शम् ॥

## मूर्त्तित्रयम् ।

( ६५ )

विधाता चेत् स्रष्टा सृजतु शुभकार्य्यं मम शतं
हरिश्चेत् पाता मां जनिमृतिभयात् पातु नियतम् ।
हरश्चेत् संहर्त्ता हरतु मम पापञ्च बहुलं
यतन्त्वां ति सर्व्वे मम सकरुणं मोचनविधौ ॥

( उद्भटसागरस्य )

---

## हरिहर-मूर्त्तिः ।

( ६६ )

विहगपुङ्गवपुङ्गववाहनं
मकरकुण्डलि कुण्डलिकुण्डलि ।
वपुरिदं कमलेशमहेशयो-
र्जयति चन्द्रकिचन्द्रकि चन्द्रकि ॥

---

## प्रश्नोत्तराणि ।

### (१) कृष्णयशोदा-प्रश्नोत्तराणि ।

( ६७ )

कृष्णेनाऽम्ब गतेन रन्तुमधुना मृद् भक्षिता स्वेच्छया
सत्यं कृष्ण क एवमाह मुषलो मिथ्याऽम्ब पश्याऽननम् ।
व्यादेहीति विकाशितेऽथ वदने दृष्ट्वा समस्तं जग-
न्माता यस्य जगाम विस्मयरसं पायात् स वः केशवः ॥

( लीलाशुकविल्वमङ्गलस्य )

---

## (२) दुर्गाकार्त्तिकेय-प्रश्नोत्तराणि ।

( ६८ )

चापल्यादिह वः सदाऽस्मि विधुरा यास्यामि तातालयं
तातस्ते जनयित्रि को गिरिगणस्येशो हि तातो मम ।
मातस्त्वं किमहो गिरीशदुहितेत्याभाषमाणे सुते
प्रोन्मीलत्स्मितमुग्धनम्रवदना गौरी चिरं पातु वः ॥

( प्रेमचन्द्र तर्कवागीशस्य )

---

## (३) बलिवामन-प्रश्नोत्तराणि ।

( ६९ )

कस्त्वं खर्वं द्विजोऽहं कुत इह नृपतेर्दक्षिणार्थी मखेऽस्मिन्
स्वर्णं गां वा गृहाण त्रिपदपरिमितां भूमिमभ्यर्थयेऽहम् ।
तुभ्यं दत्तेति यावद् वदति बलिरसौ तावदेव त्रिपादै-
स्त्रैलोक्याक्रान्तमूर्त्तिः प्रहसितवदनो वामनः पातु युष्मान् ॥

---

## (४) भरतकैकेयी प्रश्नोत्तराणि ।

( ७० )

मातस्तातः क्व यातः सुरपतिभवनं हा कुतः पुत्रशोकात्
कोऽसौ पुत्रश्चतुर्णां त्वमवरजतया यस्य जातः किमस्य ।

प्राप्तोऽसौ काननान्तं किमिति नृपगिरा किं तथासौ बभाषे
महाम्बद्धः फलं ते किमिह तव धरावीशता हा हतोऽस्मि ॥
( हनूमतः )

---

## (५) राधाकृष्ण-प्रश्नोत्तराणि ।

( ७१ )

राधे त्वं परिमुञ्च नीलवसनं प्रारुह्य नौकामिमां
वातो वारिदसम्भ्रमाद् यदि वहेन्मग्ना भवेन्नौरियम् ।
शुक्लं तद् वसनान्तरं परिदधास्यादौ भवेदं वपुः
श्यामं श्याम नवीननीरदसमं तन्मैः समाच्छाद्यताम् ॥

( ७२ )

राधे चौर्य्यगुणाऽसि केशव हृतं किं ते परस्यैव वा
हंसोजानु मृगीदृशं विधुसुधा कुम्भीशकुम्भद्वयम् ।
मच्चित्तं हरिमध्यकं विधिकृतं वस्त्रादिचौर्य्यं न मे
राधाया इति वाक्यमुग्धहृदयो राधापतिः पातु वः ॥

---

## (६) राधागोपिका-प्रश्नोत्तराणि ।

( ७३ )

नन्दगोपगृहपण्यवीथिका-
मालि यामि वद किं तवाऽनये ।

नीलमुज्ज्वलमतीव सुन्दर-
माश्रयस्व सखि केशबन्धनम् ॥

---

## (७) रावणाङ्गद-प्रश्नोत्तराणि ।

( ७४ )

कस्त्वं कस्यासि पुत्त्रः क्व पुनरिह गतः किं नु कृत्यञ्च कस्माद्
विस्पष्टं विष्टपानां विजयिनमपि मां मन्यसे त्वं तृणाय ।
हंहो पौलस्त्य पुत्त्रस्तव बलमथनस्याऽङ्गदोऽहं सुवेलात्
संप्राप्तो रामदूतः परिहर कुमते जानकीं वा शिरो वा ॥
( हनूमतः )

---

## (८) रावणविभीषण-प्रश्नोत्तराणि ।

( ७५ )

भग्नं शम्भुधनुर्गुणैरुपहतं सन्ताड़िता ताड़का
सापि स्त्री जरती खरप्रभृतयो व्यापादितास्तेऽर्भकाः ।
तालाः सप्त हतास्तृणानि किल ते वाली हतोऽसौ कपि-
र्बद्धो वारिनिधिर्निरुत्तर इति श्रुत्वाऽभवद् रावणः ॥
( हनूमतः )

---

## (९) लक्ष्मीनारायण-प्रश्नोत्तराणि ।

( ७६ )

केनचित् कारणेन मानिन्या लक्ष्म्याः सापराधम्मन्यतया भीतस्य तदन्तिक-गतस्य नारायणस्य च उक्तिप्रत्युक्ती :—

कस्त्वं चक्री नहि मम घटाद्यर्थिता गच्छ शङ्खी
नाहं पश्याम्यशुचिमशिवं हुं गदी नास्मि वैद्या ।
खड्गी खातं वत मम पुरे नास्ति पद्मी तदेहि
क्षिप्रं पद्माकरमिति हरिः श्रीकरं प्रापदुक्तः ॥

( श्यामाचरण कविरत्नस्य )

---

## (१०) लक्ष्मीपार्वती-प्रश्नोत्तराणि ।

( ७७ )

भिक्षुः क्वास्ति बलेर्मखे पशुपतिः किं नास्त्यसौ गोकुले
मुग्धे पन्नगभूषणः सखि सदा शेते स शेषोपरि ।
दुर्गे मुञ्च विषादमाशु कमले नाहं प्रकृत्या चला
चेत्थं श्रीगिरिजासमुद्रसुतयोर्वाक्चातुरी पातु वः ॥

( ७८ )

हे गङ्गाधरपत्नि चक्रिवधु किं कुत्राऽस्त्यसौ नर्त्तको
वृन्दारण्यभुवि क्व सर्पकुतुकी स्यात् कालियस्य ह्रदे ।
भिक्षुः कुत्र गतोऽस्ति यज्ञसदने क्वासौ विषादी वको-
क्रोड़े स्यादिति पद्मजागिरिजयोर्वाग्भङ्ग्यः पान्तु वः ॥

---

## (११) विष्णुशस्त्र-प्रश्नोत्तराणि ।

( ७९ )

चक्र ब्रूहि विभो गदे जय हरे कम्बो समाज्ञापय
भो भो नन्दक जीव पन्नगरिपो किं नाथ भिन्नो मया ।
को दैत्यः कतमो हिरण्यकशिपुः सत्यं भवन्नः शपे
केनास्त्रेण नखैरिति प्रवदतो विष्णोर्मुखं पातु वः ॥

---

## (१२) हरपार्वती-प्रश्नोत्तराणि ।

( ८० )

मौलौ किं नु महेश मानिनि जलं किं वक्त्रमम्भोरुहं
किं नीलालकवेणिका मधुकरो किं भ्रूलता वीचिका ।
किं नेत्रे शफरी किमु स्तनयुगं रम्यं रथाङ्गद्वयं
सासूयामिति गोपयन् गिरिसुतां गङ्गाधरः पातु वः ॥

( ८१ )

निशि तमसि समुपस्थितं शिवमवलोक्य पार्वती पृच्छति शिवोऽपि तां प्रत्याह :—

केयं मूर्ध्न्यन्धकारे तिमिरभिद्ध कुतः सुभ्रु कान्तेन्दुयुक्ते
कान्ताऽप्यत्रास्ति काचिन्ननु भवतु मया पृष्टमेतावदेव ।
नाहं द्वन्द्वं करोमीत्यपनय शिरसस्तूर्णमेनामिदानी-
मित्थं प्रोक्तो भवान्या प्रतिवचनजितः पातु वश्चन्द्रचूड़ः ॥

( ८२ )

भिक्षाटनात् प्रतिनिवृत्य सायं गृहागतं शिवं पार्वती पृच्छति, सोऽपि तां प्रतिवक्ति :—

काऽस्त्वं भो रजनीमुखे पशुपतिः किं मे हरिर्वाहनं
　　देवोमापतिरत्र नास्ति कमला शूली न वैद्यालयः ।
भीमोऽहं गिरिराजपुत्रि चपले न द्रौपदीमन्दिर-
　　मित्थं तत्परिहासकेलिकलया मुग्धो हरः पातु वः ॥

( ८३ )

कस्मात् पार्वति निष्ठुराऽसि सहजं शैलोद्भवानामिदं
　　निःस्नेहाऽसि कुतो न भस्मपुरुषः स्नेहं क्वचिद् विन्दति ।
कोपस्ते मयि निष्फलः प्रियतमे स्थाणोः फलं किं भवे-
　　दित्थं निर्वचनीकृतो दयितया शम्भुः शिवायाऽस्तु वः ॥

( ८४ )

कस्त्वं शूली मृगय भिषजं नीलकण्ठः प्रियेऽहं
　　केकामेकां कुरु पशुपतिर्लाङ्गुलं ते कथं न ।
स्थाणुर्मुग्धे न वदति तरुर्जीवितेशः शिवाया
　　गच्छाटव्यामिति हतवचाः पातु वश्चन्द्रचूडः ॥

---

## जीव-तरङ्गः ।

### राजा ।

( ८५ )

इन्द्रात् प्रभुत्वं ज्वलनात् प्रतापं
　　क्रोधं यमाद् वैश्रवणाच्च वित्तम् ।

पराक्रमं रामजनार्दनाभ्या-
मादाय राज्ञः क्रियते शरीरम् ॥

---

## राजसभा ।

( ८६ )

अन्धा विद्वज्जनैर्हीना मूका कविभिरुज्झिता ।
बधिरा गायनैर्हीना सभा भवति भूभृताम् ॥

( भट्टमल्लस्य )

---

## मन्त्री ।

( ८७ )

अमात्यः स सदा श्रेयान् काकिनीं यः प्रवर्द्धयेत् ।
कोषः कोषवतः प्राणाः प्राणाः प्राणा न भूपतेः ॥

---

## साधारण-राजस्तुतिः ।

( ८८ )

लक्ष्मीः स्थिरा क्वचिदहो क्वचिदेव वाणी
नैकत्र धीर वसतः सततं विरोधात् ।
चित्रं परं तदुभयोस्त्वयि सन्निवेशो
मन्ये तवास्ति हृदये भगवान् मुकुन्दः ॥

( ८९ )

दुर्य्योधनः सकर्णोऽसि हृदि शल्योऽसि विद्विषाम् ।
सकृपो धृतराष्ट्रोऽसि त्वमेकः कौरवायसे ॥

( ९० )

द्वारं खड्गिभिरावृतं बहिरपि प्रस्विन्नगण्डैर्गजै-
रन्तः कञ्चुकिभिः स्फुरन्मणिधरैरध्यासिता भूमयः ।
आक्रान्तं महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे
राजन् सैव चिरन्तनप्रणयिनी शून्येऽपि राज्यस्थितिः ॥

---

## जन्तुवर्गः ।

### काकः ।

( ९१ )

तिमिरारिस्तमो हन्ति तेन शङ्कितमानसाः ।
वयं काका वयं काका रटन्तीति प्रगे द्विकाः ॥

( ९२ )

नो चारू चरणौ न चापि रुचिरा चञ्चूर्न रुच्यो रवो
नो लीलाललिता गतिर्न च शुचिः पक्षग्रहोऽयं तव ।
श्रोतस्मृत्यतिदुर्भगं रवमिह स्थाने वृथैवोद्गिरन्
मूर्ख ध्वाङ्क्ष न लज्जसेऽप्यसदृशं पाण्डित्यमुन्नाटयन् ॥

---

## कोकिलः ।

( ८३ )

पिकः कृष्णो नित्यं परमकरुणया पश्यति दृशा
परापत्यद्वेषी स्वसुतमपि नो पालयति यः ।
तथाप्येषोऽमीषां सकलजगतां वल्लभतमो
न दोषा गण्यन्ते मधुरवचसां केनचिदपि ॥

( ८४ )

कोकिलानां कुहुरवकारणमाह :—

निःशेषक्षयकारिणीं कुमुदिनीनाथस्य बन्धोः कुहुं
हन्तुं प्राप्तशरासने रतिपतौ क्रोधादिव भ्राम्यति ।
अन्विष्यन्त इवास्य गूढ़पुरुषाः सर्व्वे मदा सम्भ्रमा-
दत्रात्रेत इतः कुहुः कुहुरिति प्राहुर्मुहुः कोकिलाः ॥
( श्यामाचरण कविरत्नस्य )

---

## चक्रवाकः ।

( ८५ )

कथय किमपि दृष्टं स्थानमस्ति श्रुतं वा
व्रजति दिनकरोऽयं यत्र नास्तं कदाचित् ।
इति विहगसमूहान् सादरं वक्ति नित्यं
रजनिविरहभीतश्चक्रवाको वराकः ॥

---

## चक्रवाकी ।

( ९६ )

रात्रौ विरहिणी चक्रवाकी दिवा चक्रवाकेण सह कृतं कार्य्यं स्मरन्ती विलपति :—

कवलितमिह नालं कन्दलश्चेह दष्ट-
मिह हि कुमुदकोषे पीतमम्भः सुशीतम् ।
इति विलपति रात्रौ पर्य्यटन्ती तटान्ते
सहचरपरिमुक्ता चक्रवाकी वराकी ॥

---

## चातकः ।

( ९७ )

वंशगौरवं सर्व्वथा रक्षणीयमित्याह :—

शक्यते येन केनाऽपि जीवनेनैव जीवितुम् ।
किन्तु कौलव्रतोच्छेदप्रसङ्गः परदुःसहः ॥

---

## छागः ।

( ९८ )

व्याघ्रं नैव गजं नैव सिंहं नैव च नैव च ।
अजापुत्रं बलिं दद्याद् देवो दुर्बलघातकः ॥

---

## दात्यूहः ।

( ९९ )

प्रावृट्काले गृहं त्यक्त्वा सुखी को वा भवेत् क्व वा ।
इतीरयति दात्यूहः को वः को वा क्व वा क्व वा ॥

---

## बकः ।

( १०० )

तीरेऽस्मिन् शफरीं गिलन्ननुदिनं गाम्भीर्यमम्भोनिधे-
　　र्विज्ञातुं कथमुद्यतोऽसि बक हे निक्षिप्य चञ्चूपुटम् ।
यो मग्नामिह मेदिनीमुदहरत् कल्पान्तनीरस्थितां
　　जानीते यदि केवलं स भगवान् कोलावतारो हरिः ॥

---

## भेकः ।

( १०१ )

दिव्यं चूतरसं पीत्वा गर्वं नाप्नोति कोकिलः ।
पीत्वा कर्दमपानीयं भेको मकमकायते ॥

( १०२ )

भेकः स्वावासकूपे दैवादागतं राजहंसं विलोक्य कथयति, राजहंसस्य च प्रत्युक्तिः

रे पक्षिन्नागतस्त्वं कुत इह सरसस्तत् कियद् भो विशालं
किं मद्धाम्नोऽपि वाढं नहि नहि सुमहत् पाप मा ब्रूहि मिथ्या ।
इत्थं कूपोदरस्थः शपति तटगतं दर्दुरो राजहंसं
नीचः स्वल्पेन गर्वी भवति सुविषमं नापरो येन दृष्टः ॥

---

## भ्रमरः ।

( १०३ )

पलाशकुसुमभ्रान्त्या शुकतुण्डे पतत्यलिः ।
सोऽपि जम्बूफलभ्रान्त्या तमलिं धर्त्तुमिच्छति ॥

---

## मत्स्यरङ्कः ।

( १०४ )

मत्स्यरङ्कस्य खेदोक्तिरियम् :—

सरटकुररकङ्काः काककादम्बहंसा
अहिनकुलमनुष्याः के न खादन्ति मत्स्यान् ।
अहमतितनुजीवी क्षीणमीनोपभोजी
जगति विदितमेतद् मत्स्यरङ्कः कलङ्की ॥

---

## मयूरः ।

( १०५ )

मयूरं प्रति तत्पुच्छानाम् उक्तिरियम् :—

अस्मान् विचित्रवपुषश्चिरपृष्ठलग्नान्
कस्माद् विमुञ्चसि विभो नहि मुञ्च मुञ्च ।
हा हन्त केकिवर हानिरियं तवैव
गोपालमौलिमुकुटे भविता स्थितिर्नः ॥

( राममाणिक्य विद्यालङ्कारस्य )

( १०६ )

केका कर्णामृतं ते कुसुमितकबरीकान्तिहारी कलापः
कण्ठच्छाया पुरारेर्गलरुचिरुचिरा सौहृदं मेघसंघैः ।
विश्वद्वेषिद्विजिह्वस्फुरदुरुपिशितैर्नित्यमाहारवृत्तिः
कैः पुण्यैः प्राप्यते तत् सकलमपि सखे चित्रवृत्तं मयूर ॥
( शार्ङ्गधरस्य )

( १०७ )

मयूराणां केकारवकारणमाह :—

निर्घोषन्नवनीलनीरदचयैश्छन्ने नभोमण्डले
के गच्छन्ति जना विदेशमधुना का काऽबला मानिनी ।
एतत् केकिकुलं ब्रवीति परितः संक्षिप्य संसभ्रमात्
कृत्वा बर्हविकाशमुन्नतशिरः केकेति वाणीं रुषा ॥
( श्यामाचरण कविरत्नस्य )

---

शङ्खः ।

( १०८ )

पिता रत्नाकरो यस्य कमला यस्य सोदरा ।
शङ्खो रोदिति भिक्षार्थी फलं भाग्यानुसारतः ॥
( भट्टगोविन्दराजस्य )

---

## शशकः ।

( १०९ )

न कोऽपि दैवमतिवर्त्तते :—

सिंहिकासुतसन्त्रस्तः शशः शीतांशुमाश्रितः ।
जग्रास साश्रयं तत्र तमन्यः सिंहिकासुतः ॥

---

## शृगालः ।

( ११० )

प्रत्याशं प्रतिपद्यति प्रतिपलं चञ्चूर्य्यमाणो मुदा
त्वं शार्दूलरवानुकारिनिनदं कलाऽध्वगांस्त्रासय ।
यस्तत्त्वं तव वेत्ति फेरव महान् यत्नोऽपि तस्मिन् सुधा
तस्मात् संवृत एव तिष्ठ न यथा पान्थैः स्फुटं ज्ञायसे ॥

---

## सर्पः ।

( १११ )

वासः सार्द्धं मलयजगणैः कोमलस्पर्शमङ्गं
क्षुन्निर्वाहः प्रयतपवनैः मस्तकं रत्नयुक्तम् ।
तत्राप्याशीविष इति जनैस्त्यज्यते नाममात्राद्
निन्द्यः सर्वो भवति नितरामास्यदोषेण दुष्टः ॥

---

## सिंहः ।

( ११२ )

एषः क्रीडति शूकरश्च खनति द्वीपी च गर्वायते
क्रोष्टा क्रन्दति वल्गतीह शशको वेगाद् कुरङ्गोऽवति ।
निःशङ्कैः करिपोतकैर्गिरितटश्चोत्पाट्यते लीलया
हंहो सिंह विना त्वयाऽद्य विपिने कीदृग् दशा वर्त्तते ॥

---

## हंसः ।

( ११३ )

"न तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः" इति वाक्यं दृष्टान्तेन द्रढयति :—

अस्ति यद्यपि सर्वत्र नीरं नीरजराजितम् ।
रमते न मरालस्य मानसं मानसं विना ॥

( ११४ )

पुरा सरसि मानसे विकचपङ्कजालिस्खलत्-
परागधवलीकृते पयसि येन नीतं वयः ।
स पल्वलजलेऽधुना मिलदनेकभेकाकुले
मरालकुलनायको विवदने विधौ वर्त्तते ॥

---

## हरिणः ।

( ११५ )

मृगस्योक्तिरियम् :—

त्यक्तं जन्मवनं तृणाङ्कुरवती मातेव भुक्ता स्थली
विश्रामस्थितिहेतवो न गणिता बन्धूपमाः पादपाः ।
बालापत्यवियोगकातरमुखी त्यक्ताऽर्द्धमार्गे मृगी
पश्यन्तः पदवीं तथाप्यकरुणव्याधा न मुञ्चन्ति माम् ॥

---

## हस्ती ।

( ११६ )

कश्चिदर्थी कस्यचित् धनिनो गृहात् हृताशः प्रतिनिवर्त्तमानस्तमिदमाह :—

दानार्थिनो मधुकरा यदि कर्णघातै-
र्दूरीकृताः करिवरेण मदान्धबुद्धया ।
तस्यैव गण्डयुगमण्डनहानिरेषा
भृङ्गाः पुनर्विकचपद्मवने चरन्ति ॥

---

## उद्भित्-तरङ्गः ।

## सामान्य-वृक्षः ।

( ११७ )

नूतनैर्दलसन्दोहैस्तरुर्यैरेव शोभते ।
जहाति जीर्णांस्तानेव किं वा चित्रं कुजन्मनः ॥

( उपाध्यायोदयस्य )

---

## आम्रः ।

( ११८ )

येऽभिज्ञा मुकुलोद्गमादनुदिनं त्वामाश्रिताः षट्पदा-
स्ते भ्राम्यन्ति फलाद् बहिर्बहिरहो दृष्ट्वा न संभाषसे ।
ये कीटास्तव दृक्पथञ्च न गतास्ते त्वत्फलाभ्यन्तरे
धिक् त्वां चूततरो परापरपरिज्ञानानभिज्ञो भवान् ॥

---

## इक्षुः ।

( ११९ )

परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो
यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः ।
न संप्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः
किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः ॥

( इन्द्रराजस्य )

---

## कदली ।

( १२० )

धरित्रि पुष्पाञ्जलिरेष तुभ्यं
सुता मदीयास्तव पालनीयाः ।
इतीव रम्भा नमिताग्रमौलिना
रोरुद्यमाना मकरन्दबिन्दुना ॥

( १२१ )

तालीतरोरनुपकारि फलं फलित्वा
लज्जावशादुचित एव विनाशयोगः ।
एतत्तु चित्रमुपकृत्य फलैः परेभ्यः
प्राणान् निजान् झटिति यत् कदली जहाति ॥

---

## कल्पवृक्षः ।

( १२२ )

कश्चित् धनिनमुद्दिश्य उक्तिरियम् :—

सुरतरुमूलनिवासी
यद्युपवासी भवेदर्थी ।
कमपरभूरुहमवनौ
स्वोदरभरणाय याचतामेषः ॥

---

## केतकी ।

( १२३ )

व्यालाश्रितापि विफलापि सकण्टकापि
वक्रापि पङ्किलभवापि दुरासदापि ।
गन्धेन बन्धुरसि केतकि सर्वजन्तो-
रेको गुणः खलु निहन्ति समस्तदोषान् ॥

---

## चन्दनः ।

( १२४ )

सारवान् क्षुद्रोऽपि असारमुन्नतं पराभवतीत्याह :—

सन्त्येव गिलिताकाशा महीयांसो महीरुहाः ।
तथापि जनताचेतोनन्दनश्चन्दनद्रुमः ॥

( हरिगणस्य )

( १२५ )

विविधगुणसम्पन्नोऽपि धनशून्यश्चेत् स दरिद्राय न रोचते इत्याह :—

छायया कति न तर्पिता जनाः,
सौरभैः कति न वासिता दिशः ।
को भवन्तमपहातुमीहते
छिन्न चेज्जगति चन्दनद्रुम ॥

---

## तिन्तिड़ी ।

( १२६ )

जगत्प्राणो हरेत् प्राणान् जीवनं जीवनं हरेत् ।
यस्मोहरे किमाश्चर्यं प्राणदा यमदूतिका ॥

( कविचन्द्रस्य )

---

## धुस्तूरम् ।

( १२७ )

माधुर्य्यसाराधरितामृतस्य
तत् कण्टकित्वं पनसस्य सह्यम् ।
उन्मादिनो मातुलपुत्रकस्य
सहामहे किं तव कण्टकित्वम् ॥

---

## पद्मम् ।

( १२८ )

यन्माता विष्णुनाभि: समजनि तनयो यस्य देव: स्वयम्भू-
र्लक्ष्मीर्यत्संश्रयाभूद् यदपि करतले भारती संबभार ।
भानुर्यस्यास्ति मित्रं तदपि सरसिजं चीग्रमिन्दोर्मयूखै-
-स्त्रातुं नैवोत्सहन्ते गतसुकृतफलं प्राप्तकालं सहाया: ॥

( १२९ )

खद्योतास्तरलीभवन्ति भगवानस्तं गतो भानुमान्
कोक: शोकमुपैति मत्तमनस: क्रेंकुर्वते कौशिका: ।
इत्थं चेत् सदसद्विवेकविधुरो धाता तदेतादृशं
न द्रष्टव्यमितीव मुद्रितवती पद्मेक्षणं पद्मिनी ॥

---

## पलाशः ।

( १३० )

किंशुके शुक मा तिष्ठ चिरं भाविफलाशया ।
वाह्यरङ्गप्रपञ्चेन के के नानेन वञ्चिताः ॥

---

## शालिः ।

( १३१ )

शाखासन्ततिसन्निरुद्धनभसो भूयांस एवावनौ
विद्यन्ते तरवः फलैरविकलैरार्त्तिच्छिदः प्राणिनाम् ।
किन्तु द्वित्वदलैरलङ्कृततनोः शालेः सुमस्तुङ्गतां
दत्वा येन निजं शिरः सुकृतिना के नाम न प्रोषिताः ॥

---

## स्वभावोक्ति-तरङ्गः ।

## तड़ागः ।

( १३२ )

गत्यन्तरविहीन आश्रितो जन आश्रयभूतं दातारं दानविमुखं विदित्वा इदमाह :—

आपेदिरेऽम्बरपथं परितः पतङ्गा
भृङ्गा रसालमुकुलानि समाश्रयन्ति ।
सङ्कोचमञ्चति सरस्त्वयि दीनदीनो
मीनो नु हन्त कतमां गतिमभ्युपैति ॥

---

## नदी ।

( १३३ )

धनं पदगौरवं वा न चिरं तिष्ठति तस्मात् तन्मदमत्ततया किमपि दुष्कृतं न करणीयमित्युपदिशति :—

कतिपयदिवसस्थायी
पूरो दूरोन्नतोऽपि भविता ते ।
तटिनि तटद्रुमपातन-
पातकमेकं चिरस्थायि ॥

---

## मलयः ।

( १३४ )

विद्योतन्ते कति न गिरयस्तेषु किं नोदयन्ते
शाखावन्तः खदिरबदरीशालशाखोटकाद्याः ।
धन्यस्तावन्मलयशिखरी यत्र जातास्त एव
स्वैरामोदैस्त्रितयभुवनं प्रीणयन्तः स्फुरन्ति ॥

---

## मेघः ।

( १३५ )

मामकां भूमिसम्पत्तिरूपां जीविकामुन्मोचयितुकामः कोऽपि कस्यचिद् भूस्वामिनः शरणापन्नस्तेन प्रीतिवचसा प्रोषितोऽपि स्वार्थसिद्धिमलभमानस्तमिदमाह :—

तवैव शरणागतं भवदधीनवृत्तिं प्रभो
तृषार्त्तमपि चातकं जलद वञ्चितं मा कुरु ।

सुहृत्तु यदि निश्चितं सलिलमेव देयं न मे
कथं मधुरतिस्वनैर्विधुरमाश्वसिष्यादरात् ॥

( १२६ )

कश्चिदर्थी कस्यचिद्धनिनो गृहं गत्वा तन्मुखदत्तेचणः सुचिरमवतिष्ठमान-सत्यालापमात्रमपि नोपलभ्य तमिदमाह :—

नभसि निरवलम्बे सीदता दीर्घकालं
त्वदभिमुखनिविष्टोत्तानचञ्चूपुटेन ।
जलधर जलधारा दूरतस्तावदास्तां
ध्वनिरपि मधुरस्ते न श्रुतश्चातकेन ॥

---

## वायुः ।

( १२७ )

प्राणास्त्वमेव जगतः पवनस्त्वमेव
विश्वं पुनासि परितः परितो विहृत्य ।
एकं पुनः सकलभूषण दूषणं ते
वह्नेः सखा भवसि यद्‌ भवनं दिधक्षोः ॥

---

## सरोवरः ।

( १२८ )

मेघं प्रति सरोवरस्योक्तिरियम् :—

निष्पङ्कं शिशिरेण धीवरगणैर्निर्मीननिष्कूर्मकं
व्याधैर्निर्विहगं निरम्बु रविणा निर्नालकं दन्तिभिः ।

निःशालूकमकारि शूकरगणैर्नामावशेषं सरो
हे पाथोद परोपकारक पयोदानेन मां पूरय ॥

( १३९ )

प्राग्गतिवदान्यं पश्चात् क्षीणसम्पदमपि याचकेभ्यः यथाशक्ति ददतं कञ्चिद् दातारमभिप्रेत्य कस्यचित् कवेरुक्तिरियम् :—

वारैः शीकरवर्षिभिः श्रुतिसुखैर्हंसावलीनिस्वनै-
रुन्निद्रैः कमलैः पयोभिरमलैर्नीत्वा जनान् निर्वृतिम् ।
पश्चात् क्षीणधनां वहन्निजतनुं धन्यो मृणालोच्छला-
दर्थिभ्यः प्रददन्नवेन्दुविशदान्यस्थीनि पद्माकरः ॥

---

## सागरः ।

( १४० )

कृतापकारमपि दुर्जनं प्राप्तकालाः सुजना उपकुर्वन्त्येवेत्याह :—

यद्यपि बद्धः शैले-
र्यद्यपि गिरिमथनमुषितसर्वस्वः ।
तदपि परभीतभूधर-
रक्षायां दीक्षितो जलधिः ॥

( १४१ )

सत्स्वपि बहुषु धनेषु यदि तैः परोपकारो न स्यात् तदा तानि विफलान्येवेत्याह :—

मा कुरु गुरुतागर्वं
लघुरन्यो नास्ति सागर त्वत्तः ।
जलसंग्रहमन्यस्मात्
त्वयि सति कुर्वन्ति पोतस्थाः ॥

( १४२ )

कृतोपकारं जनं कथञ्चिन्नावमन्येतेत्याह :—

कल्लोलवेल्लितदृषत्परुषप्रहारै
रत्नान्यमूनि मकराकर मावमंस्थाः ।
किं कौस्तुभेन विहितं तव नाम नासीत्
प्राप्तुं प्रसारितकरः पुरुषोत्तमो यम् ॥

( १४३ )

धनलिप्सया राजान्तिकमुपागतस्य सपदि तं राजानं विषमविपद्व्याकुलं विलोकितवतो याचकस्योक्तिरियम् :—

अयं वारां पूर्णो निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णाविचलितमनोभिर्जलनिधिः ।
क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ॥

( मालवरुद्रस्य )

( १४४ )

कस्मिंश्चिद्विद्वत्तमे कस्यचित् राज्ञः सकाशात् राजान्तरसन्निधिं गन्तुमुद्यते प्रथमं राजानं प्रति कस्यचिदुक्तिरियम् :—

निष्पीतपीनतिमिराणि मनोहराणि
रत्नानि सन्ति न कियन्ति तवान्तिकेषु ।
एतस्य कौस्तुभमणेर्व्रजतः परन्तु
पाथोनिधे स्मरणमान्तरमावहेथाः ॥

---

## सूर्य्यास्त-वर्णनम् ।

( १४५ )

दिशि दिशि विलसन्तः सन्ति खद्योतपोताः
प्रतिगृहमपि दीपा दर्शयन्ति प्रतिष्ठाम् ।
अधिगगनमनन्तास्तारका राजमानाः
सवितरि परिभूते किं न लोकैरलोकि ॥
( कृष्णकान्त विद्यावागीशस्य )

( १४६ )

ध्वान्तौघः कवलीकरोति जगतीं निर्व्वान्ति सूर्य्योपलाः
खद्योताश्च परिस्फुरन्ति सततं सीदन्ति पद्मान्यपि ।
ये तु ध्वाङ्क्षभिया स्वकोटरबहिर्निर्य्यान्ति नो कर्हिचित्
तेऽप्युच्चैर्विहरन्ति हा दिनमणे कुत्र त्वया प्रस्थितम् ॥

---

## निन्दा-प्रशंसा-तरङ्गः ।

### (क) निन्दा-तरङ्गः ।

### असन्तोष-निन्दा ।

( १४७ )

विषयतृष्णायाः शक्तिं दर्शयति :—

तृष्णे कृष्णेऽपि ते शक्तिर्दृष्टा मर्त्त्येषु का कथा ।
त्रैलोक्यव्यापि यद् रूपं तत् त्वया वामनीकृतम् ॥

( १४८ )

तृष्णया बद्धमुक्तयोर्जगद्विलक्षणं भेदवैचित्र्यं दर्शयति :—

तृष्णैवास्ति मनुष्याणां काचिदाश्चर्यशृङ्खला ।
प्रधावति यया बद्धो मुक्तस्तिष्ठति पङ्गुवत् ॥

---

## उदर-निन्दा ।

( १४९ )

राहोः शिरोव्यतिरिक्तं शरीरं नास्तीत्य भिसन्धाय आह :—

एकः स एव जीवति
हृदयविहीनोऽपि सहृदयो राहुः ॥
यः सकललघिमकारण-
मुदरं न बिभर्त्ति दुष्पूरम् ॥

---

## ऋण-निन्दा ।

( १५० )

नहि उत्तमर्णः कालं प्रतीक्षते इत्याह :—

अन्तकोऽपि हि जन्तूनामन्तकालमपेक्षते ॥
न कालनियमः कश्चिदुत्तमर्णस्य विद्यते ॥

---

## कलिकाल-निन्दा ।

( १५१ )

कलिकालेऽव स्वामिभक्तिविहीनानां नारीणां दोषान् दर्शयति :—

भाषन्ते वनिता: कलौ प्रतिवचोऽप्रीतिप्रदं स्वामिन-
स्तासां यत् पतिदेवतेति वचनं षष्ठीसमासाश्रितम् ।
लज्जाधर्म्मभयं न तासु कतिचित् कार्य्ये यथेच्छं रता
नासावद्धगवोपमान् निजपतीन् कुर्वन्ति धन्य: कलि: ॥

---

## कापुरुष-निन्दा ।

( १५२ )

तेजस्विसकाशात् स्वल्पतेजसो जनस्य तेज: सोढुं न शक्यते इत्याह :—

सह्यं तेजीयसां तेजस्तेन तेजीयसां न तु ।
मूर्ध्नि सह्यं रवेस्तेज: सिकता न पदे पुन: ॥

---

## कुकवि-निन्दा ।

( १५३ )

कुकवि: सुकवेर्दोषं धत्ते यत्नैर्जहद् गुणम् ।
यत्नत: शर्करां हित्वा पुरीषमत्ति शूकर: ॥

( १५४ )

अवय: केवलकवय:
कीरा: स्यु: केवलं धीरा: ।

वीराः पण्डितकवय-
स्त्वामवमन्ता तु केवलं गवयः ॥

---

## कुपुत्र-निन्दा ।

( १५५ )

शनैः शनैर्विनीयन्ते रोषणैस्तोषणैरपि ।
नवाश्वा इव कुशलैर्बालाश्चपलचेतसः ॥

( हरिहरस्य )

---

## कुवैद्य-निन्दा ।

( १५६ )

कुवैद्यो बहून् रोगिणो नाशयतीत्याह :—

वैद्यनाथ नमस्तुभ्यं नाशिताशेषमानव ।
त्वयि विन्यस्तभारोऽयं सुषुप्तः स्वयमन्तकः ॥

---

## कुसंसर्ग-निन्दा ।

( १५७ )

अणुरप्यसतां सङ्गो नितरां हन्ति सद्गुणम् ।
गुणरूपान्तरं याति दुग्धं तक्रस्य बिन्दुना ॥

---

## कृतघ्न-निन्दा ।

( १५८ )

विपत्काले न कोऽपि बन्धुरस्तीति सोदाहरणमाह :—

ब्रह्मा च विष्णुश्च दिवाकरश्च
लक्ष्मीश्च वाणी कमलस्य बन्धुः ।
तथापि तस्यास्ति हिमाद् विपत्तिः
को बन्धुरस्तीह विपत्तिकाले ॥

---

## कृपण-निन्दा ।

( १५९ )

बोधयन्ति न याचन्ते भिक्षुकाः पात्रपाणयः ।
दर्शयन्त्येव लोकानामदातुर्गतिरीदृशी ॥

( १६० )

सति द्राक्षाफले क्षीरे मृदामास्वादनं मुदे ।
अहो मातुरियं रीतिः कृपणे गर्भवर्त्तिनि ॥

---

## जामातृ-निन्दा ।

( १६१ )

श्वशुरेण जामातुस्तृप्तिसाधनं कदाचिदपि न सम्भवेदित्याह :—

सूर्य्यादयो ग्रहाः सर्वे तुष्यन्त्युचितदानतः ।
सर्वस्वेनापि नो तुष्येज्जामाता दशमो ग्रहः ॥

( १६२ )

जामातरि कृष्णसर्पे पावके दुर्ज्जने तथा ।
विश्वासो नैव कर्त्तव्यः पञ्चमे भगिनीसुते ॥

---

## दारिद्र्य-निन्दा ।

( १६३ )

न कोऽपि दरिद्रवचसि कर्णं ददातीति सिद्धपुरुषसादृश्येन दर्शयति :—

हे दारिद्र्य नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः ।
पश्याम्यहं जगत् सर्वं न मां पश्यति कश्चन ॥

( १६४ )

कश्चित् कविः कस्यचिद् राज्ञः समीपे षट्समासात्मिकया कवितयाऽनया निजदारिद्र्यं निवेदयति :—

द्विगुरपि सद्वन्द्वोऽहं
गृहे च मे सततमव्ययीभावः ।
तत्पुरुष कर्म्मधारय
येनाहं स्यां बहुव्रीहिः ॥

( भट्टमुक्तिकलसस्य )

( १६५ )

विकटदारिद्र्यं वर्णयति :—

मद्गेहे मुषलीव मूषिकवधूर्मूषीव मार्ज्जारिका
मार्ज्जारीव शुनी शुनीव गृहिणी वाच्यः किमन्यो जनः ।

मूर्च्छापन्नशिशूनसून् विजहतो दृष्ट्वा च झिल्लीरवै-
लूँतातन्तुवितानसंवृतमुखी चुल्ली चिरं रोदिति ॥
( विक्रमादित्यस्य, केषाञ्चिन्मते दुर्गतस्य )

( १६६ )

काचिद् विदुषी रमणी धनोपार्ज्जनाय प्रोषितं स्वामिमुद्दिश्य आह :—

विकसामि रवावुदिते
सङ्कोचमुपैमि चास्तमुपयाते ।
दारिद्र्यसरसि मग्ना
पङ्कजलीलामनुभवामि ॥
( जयन्तीदेव्याः )

( १६७ )

दूये कान्ताकरं वीक्ष्य मणिकङ्कणवर्ज्जितम् ।
अतःपरं परं दूये मणिकङ्कणवर्ज्जितम् ॥
( जयन्तीदेव्याः )

( १६८ )

दग्धं खाण्डवमर्जुनेन बलिना दिव्यैर्द्रुमैः सेवितं
दग्धा वायुसुतेन रावणपुरी लङ्का पुनः स्वर्णभूः ।
दग्धः पञ्चशरः पिनाकपतिना तेनाप्ययुक्तं कृतं
दारिद्र्यं जनतापकारकमिदं केनापि दग्धं नहि ॥
( निशानारायणस्य )

———

## दुर्जन-निन्दा ।

( १६९ )

कर्णामृतं सूक्तिरसं विमुच्य
दोषेषु यत्नः सुमहान् खलस्य ।
अवेक्षते केलिवनं प्रविश्य
क्रमेलकः कण्टकजालमेव ॥

( विह्लणस्य )

( १७० )

यस्य यः स्वभावः स कथमपि नापैतीत्याह :—

सुनिष्णातोऽपि वेदान्ते साधुत्वं नैति दुर्जनः ।
चिरं जलनिधौ मग्नो मैनाक इव मार्दवम् ॥

( १७१ )

श्लेषमाश्रित्य खलानलयोः साम्यं दर्शयति :—

मित्रोदये म्लानिमुपैति सम्यग्
दोषागमे द्योतत एव नित्यम् ।
सम्बन्धमात्रेण दहत्यवश्यं
खलेऽनले वा कतरो विशेषः ॥

( १७२ )

खलानां परगुणासहिष्णुतामाह :—

आविष्कृतान् परगुणान् कलयन्ति तूष्णीं
दुश्चेतसो ननु विदूषयितुं न रागात् ।
आकर्णयन्ति किल कोकिलकूजितानि
सन्धातुमेव निजसप्तनलीं किराताः ॥

( १७३ )

याचकान् प्रति धनिनामाचरणमाह :—

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥

---

## नारी-निन्दा ।

( १७४ )

परं प्रचण्डा कटुवाक्यवादिनी
विवादशीला परगेहगामिनी ।
मौखर्य्ययुक्ता च पतीष्टनाशिनी
त्यज्येत भार्य्या दशपुत्त्रपुत्त्रिणी ॥

---

## निर्गुण-निन्दा ।

( १७५ )

पूर्णोऽपि कुम्भो न करोति शब्दं
रिक्तो घटो घोषमुपैति घोरम् ।
विद्वान् विनीतो न करोति गर्वं
बहूनि जल्पन्ति गुणैर्विहीनाः ॥

---

# भिक्षा-निन्दा ।

( १७६ )

कदाचिदेको धनवान् कविः दैववशाद् दारिद्र्योपहतोऽपि मानभिया कस्या-प्यन्तिकं गन्तुं नोत्सेहे। एवमेव यदा प्रार्थनाप्रयोजनं नितरामेव जातं तदासौ कस्यचित् धनवतः समीपमुपगम्य वक्ष्यमाणपद्येन स्वामवस्थां विज्ञापितवान् :—

( क )

नवीनदीनभावस्य याचमानस्य मानिनः ।
वचोजीवितयोरासीत् पुरोनिःसरणे रणः ॥

साम्प्रतं हीनावस्थोऽसौ धनाढ्यः कवेः श्लोकमाकर्ण्य श्लोकस्यैतत्परिवर्त्तन-माकाङ्क्ष्य कौशलेनोक्तवान्, महात्मन् भवतः श्लोको नितरामेव चारुतरः किन्तु अस्ति तावदत्र दोषलेशः ; मन्ये याचमानस्येत्यत्र य-कारः पतितः, एतद्योगेनैव च मम अभिप्रायो भवता ज्ञातव्यो भवेत्. एवमभिधाय वक्ष्यमाणप्रकारेण पठितवान् :—

( ख )

नवीनदीनभावस्य याच्यमानस्य मानिनः ।
वचोजीवितयोरासीत् पुरोनिःसरणे रणः ॥

( १७७ )

मक्षिकासादृश्येन भिक्षुकान् निन्दति :—

अनाहूताः स्वयं यान्ति रसास्वादविलोलुपाः ।
निवारिता न गच्छन्ति मक्षिका इव भिक्षुकाः ॥

( १७८ )

याचकमशकयोः सादृश्यं दर्शयति :—

याचके मशके तुल्या वृत्तिः सृष्टिकृता कृता ।
प्रायः प्रहारभागित्वं क्वचिदाहारभागिता ॥

---

## भृत्य-निन्दा ।

( १७९ )

यतिभृत्ययोः साम्यं वैधर्म्यञ्च दर्शयति :—

भूशय्या ब्रह्मचर्य्यञ्च कृशत्वं लघुभोजनम् ।
सेवकस्य यतेः साम्यं पार्थक्यं पापधर्म्मजम् ॥

---

## मद्यपान-निन्दा ।

( १८० )

मद्यपस्य कुतः सत्यं दया मांसाशिनः कुतः ।
कामिनश्च कुतो विद्या निर्धनस्य कुतः सुखम् ॥

---

## मूर्ख-निन्दा ।

( १८१ )

हरेः पादाहतिः श्लाघ्या न श्लाघ्यं खररोहणम् ।
स्पर्द्धापि विदुषा युक्ता न युक्ता मूर्खमित्रता ॥

---

## पुत्र-निन्दा ।

( १८२ )

जायमानो हरेद् दारान् वर्द्धमानो हरेद् धनम् ।
म्रियमाणो हरेत् प्राणान् कथं पुत्रः सुखावहः ॥

---

## प्रेम-निन्दा ।

( १८३ )

अत्यन्तप्रेमसम्बन्धो न सुखाय कदाचन ।
अर्द्धनारीश्वरः शम्भुः प्रियावक्त्रं न वीक्षते ॥

---

## लोकवाद-निन्दा ।

( १८४ )

निरङ्कुशं जनाननमिति कथयति :—

अर्थिनं याचकं रक्षाकर्त्तारं च जनार्दनम् ।
संहारकं शिवं वक्ति भुवि लोको निरङ्कुशः ॥

---

## लोभ-निन्दा ।

( १८५ )

किं दातुरखिलैर्दोषैः किं लुब्धस्याखिलैर्गुणैः ।
न लोभादधिको दोषो न दानादधिको गुणः ॥

( नीलकण्ठदीक्षितस्य )

---

## स्थानच्युति-निन्दा ।

( १८६ )

सिंहक्षुण्णकरीन्द्रकुम्भपतितं रक्तात्तमुक्ताफलं
कान्तारे बदरीभ्रमाद् द्रुतमगाद् भिल्लस्य पत्नी मुदा ।
पाणिभ्यां परिगृह्य शुभ्रकठिनं तद् वीक्ष्य दूरे जहा-
वस्थाने पततामतीवमहतामेतादृशी दुर्गतिः ॥

---

## (ख) प्रशंसा-तरङ्गः ।

### उद्भट-कविता-प्रशंसा ।

( १८७ )

उद्भटकवितोत्कर्षं कथयति :—

उद्भटश्लोकसद्द्रव्यसंग्रहं न करोति यः ।
प्रस्तावयज्ञसंप्राप्तौ कां स दास्यति दक्षिणाम् ॥

( १८८ )

उद्भटश्लोकसङ्गीतबाललीलाप्रकाशनैः ।
मनो न भिद्यते यस्य स योगी ह्यथवा पशुः ॥

( १८९ )

उद्भटाः कविताः प्राचां रसभावोद्भटाः पराः ।
सर्वदैव नवायन्ते न वा सन्ति पुरातनाः ॥

( १९० )

यशो धर्म्मो नयो दाक्ष्यसुब्रुटश्लोकवाग्मिता ।
एतेषां गुणरत्नानां संग्रही नावसीदति ॥

---

## उद्यम-प्रशंसा ।

( १९१ )

लभन्ते न विनोद्योगं प्राणिनः सम्पदां पदम् ।
अब्धिमन्थनजं दुःखं लब्ध्वा देवाः सुधां पपुः ॥

---

## गुण-प्रशंसा ।

( १९२ )

गुणाः सर्वत्र पूज्यन्ते दूरेऽपि वसतां सताम् ।
केतकीगन्धमाघ्रातुं स्वयं गच्छन्ति षट्पदाः ॥

---

## गृहविशेष-प्रशंसा ।

( १९३ )

यदि रामा यदि च रमा
यदि तनयो विनयधीगुणोपेतः ।
तनयात् तनयोत्पत्तिः
सुरवरनगरे किमाधिक्यम् ॥

( १९४ )

श्लाघ्यं गृहस्थाश्रमं वर्णयति :—

सानन्दं सदनं सुताश्च सुधियः कान्ता मनोहारिणी
सन्मित्रं सुधनं स्वयोषिति मतिः सेवारताः सेवकाः ।
आतिथ्यं सुरपूजनं प्रतिदिनं मिष्टान्नपानं गृहे
साधोः सङ्ग उपासना च सततं धन्यो गृहस्थाश्रमः ॥

---

## दान-प्रशंसा ।

( १९५ )

वित्तत्यागयोर्योगं स्तौति :—

गुणो वित्तवतां त्यागो वित्तं त्यागवतां गुणः ।
परस्परवियुक्तौ तु वित्तत्यागौ विडम्बना ॥

( भट्टप्रद्युम्नस्य )

( १९६ )

तुरगशतसहस्रं गोगणानाञ्च लक्षं
कनकरजतपात्रं मेदिनीं सागरान्ताम् ।
विमलकुलवधूनां कोटिकन्याश्च दद्याद्
नहि नहि सममेतद् भक्तदानैः प्रधानैः ॥

---

## दाम्पत्यप्रेम-प्रशंसा ।

( १९७ )

आहृत्य चिनुमः स्वर्गमपवर्गमपि क्रमात् ।
अनुकूले हि दाम्पत्ये प्रतिकूलं न किञ्चन ॥

( नीलकण्ठदीक्षितस्य )

---

## धन-प्रशंसा ।

( १९८ )

दुन्दुभिश्च सुतरामचेतन-
स्तन्मुखादपि धनं धनं धनम् ।
इत्थमेव निनदः प्रवर्त्तते
चेतनो यदि जनः किमद्भुतम् ॥

---

## धर्म्म-प्रशंसा ।

( १९९ )

दुःखेनोपार्ज्यते धर्म्मः सुखेन तु विनाश्यते ।
कष्टलब्धमिमं त्यक्तुं नेच्छन्ति मुनयः सुखम् ॥

( नीलकण्ठदीक्षितस्य )

---

## धीर-प्रशंसा ।

( २०० )

आफलोदयकर्म्माणो हि धीरा इत्याह :—

रत्नैरमूल्यैस्तुतुषुर्न देवा
न भेजिरे भीमविषाद् विभीतिम् ।
सुधां विना न प्रययुर्विरामं
न निश्चितार्थाद् विरमन्ति धीराः ॥

---

## पण्डित-प्रशंसा ।

( २०१ )

शून्यमापूर्णतामेति मृतश्चाप्यमृतायते ।
विपत् सम्पदिवाभाति विद्वज्जनसमागमात् ॥

( भट्टेन्दुराजस्य )

---

## परिच्छद-प्रशंसा ।

( २०२ )

वासः प्रसूतिः खलु योग्यताया
वासोविहीनं विजहाति लक्ष्मीः ।
पीताम्बरं वीक्ष्य ददौ तनूजां
दिगम्बरं वीक्ष्य विषं समुद्रः ॥

---

## परोपकार-प्रशंसा ।

( २०३ )

पिबन्ति नद्यः स्वयमेव नाम्भः
स्वयं न खादन्ति फलानि वृक्षाः ।
नादन्ति शस्यं खलु वारिवाहाः
परोपकाराय सतां विभूतिः ॥

---

## पौरुष-प्रशंसा ।

( २०४ )

किं जन्मना च महता पितृपौरुषेण
शक्त्यैव याति निजया पुरुषः प्रतिष्ठाम् ।
कुम्भोऽपि कूपमपि शोषयितुं न शक्तः
कुम्भोद्भवेन मुनिनाऽम्बुधिरिव पीतः ॥

---

## प्रार्थनाकौशल-प्रशंसा ।

( २०५ )

शब्दशास्त्रविदां चित्रमर्थाहरणकौशलम् ।
अव्ययेभ्योऽपि ये चार्थान् निष्कर्षन्ति सहस्रशः ॥

---

## प्रेम-प्रशंसा ।

( २०६ )

न खलु स्वकीयान् जनान् प्रति वैमुख्यमुचितं कदापि स्वामिन इत्याह :—

अन्तरायपरिग्रस्ता स्वीयमित्यनुकम्पया ।
दुर्दिनेऽपि दिनेशोऽयं प्रफुल्लयति पद्मिनीम् ॥

( २०७ )

आधारभेदादेकस्यापि आधेयस्य भिन्नतां दर्शयति :—

योऽन्यमुखे दुर्वादः
प्रियतमवदने स एव परिहासः ।
इतरेन्धनजो धूमः
स एव चागुरुभवो धूपः ॥
( गोवर्द्धनाचार्य्यस्य )

---

## ब्राह्मण-प्रशंसा ।

( २०८ )

इयं ब्राह्मणनौ राजन्नपूर्व्वैव भवार्णवे ।
तरन्त्यधःस्थिता लोका मज्जन्त्युपरिवर्त्तिनः ॥

---

## मधुरभाषित्व-प्रशंसा ।

( २०९ )

वाङ्माधुर्य्यात् सर्वलोकप्रियत्वं
वाक्पारुष्यात् सर्वलोकाप्रियत्वम् ।
किं वा लोके कोकिलेनोपनीतं
किं वा लोके गर्दभेनापनीतम् ॥

---

## मनस्वि-प्रशंसा ।

( २१० )

अनामा भूषणं धत्ते न कनिष्ठा न मध्यमा ।
निजनामप्रसिद्धानां भूषणैः किं प्रयोजनम् ।

---

## मानि-प्रशंसा ।

( २११ )

रिपव एव मानिनामभ्युदयनिदानमित्याह :—

श्रीरामस्य दशाननो न कृतवान् दारापहारं यदि
क्वाम्भोधिः क्व च सेतुबन्धघटना क्वोत्तीर्य्य लङ्काजयः ।
पार्थस्यापि पराजयं यदि रिपुर्नाधात् क्व तादृक् तपो
नीयन्ते रिपुभिः समुन्नतिपदं प्रायः परं मानिनः ॥

---

## यज्ञोपवीत-प्रशंसा ।

( २१२ )

परशुरामं प्रति रामचन्द्रस्योक्तिरियम् :—

भो ब्रह्मन् भवता समं न घटते संग्रामवार्त्ताऽपि नः
सर्वे हीनबला वयं बलवतां यूयं स्थिता मूर्द्धनि ।
यस्मादेकगुणं शरासनमिदं राजन्यकानां बलं
युष्माकं द्विजजन्मनां नवगुणं यज्ञोपवीतं बलम् ॥

---

## विद्या-प्रशंसा ।

( २१३ )

न चौरहार्य्यं न च राजहार्य्यं
न भ्रातृभाज्यं न च भारभूतम् ।
व्ययेऽपि यद् वृद्धिमुपैति नित्यं
विद्याधनं तत् परमं धनेषु ॥

---

## विनय-प्रशंसा ।

( २१४ )

आदावेव विनीतः सदुपायं चिन्तयेत् सुधीः ।
पूर्वमेव चितौ नत्वा दन्तिनं हन्ति केशरी ॥

( कुसुमदेवस्य )

---

## श्यालक:-प्रशंसा ।

( २१५ )

भगिनीपतेरन्तिके श्यालकस्य आदरातिशय एवेत्याह :—

गृहिणीसोदरस्येह गृहिण्या आदरः परः ।
कौस्तुभो हृदये नित्यं लक्ष्मीः पादतले हरेः ॥

---

## सन्तोष-प्रशंसा ।

( २१६ )

सन्तोषाच्छतलक्षिर्हि गरीयसीत्याह :—

अकृत्वा परसन्तापमगत्वा नीचनम्रताम् ।
अनुत्सृज्य सतां मार्गं यत् स्वल्पमपि तद् बहु ॥

---

## सुकवि-प्रशंसा ।

( २१७ )

करीन्द्रस्य कवीन्द्रस्य भूभृत्तुष्टिकरावुभौ ।
उभावप्येकधर्माणौ भेदस्तु रवयोस्तयोः ॥

( २१८ )

सुकवेरपि विपदं दर्शयति :—

अग्रे तार्किककेशरी प्रचलति क्रोधेन रक्तेक्षणः
पश्चाद् याति च शब्दचारुचतुरः काव्यापशार्दूलकः ।
तन्मध्ये कविते कुरङ्गदयिते शक्तोषि चेज्जीवितुं
हारं रत्नमयं गले तव तदा दास्याम्यहं सादरम् ॥

---

## सुकाव्य-प्रशंसा ।

( २१९ )

श्लोको हि भवति श्लोको यत्र तिष्ठन्ति साधवः ।
लकारो लुप्यते यत्र यत्र तिष्ठन्त्यसाधवः ॥

( २२० )

सुधाकाव्यरसयोः पार्थक्यं न ज्ञातुं शक्यते इत्याह :—

कान् पृच्छामः सुराः स्वर्गे निवसामो वयं भुवि ।
किं वा काव्यरसः स्वादुः किं वा स्वादीयसी सुधा ॥

---

## सुजन-प्रशंसा ।

( २२१ )

गङ्गा पापं शशी तापं दैन्यं कल्पतरुर्हरेत् ।
पापं तापञ्च दैन्यञ्च हरेत् साधुसमागमः ॥

( २२२ )

नवनीतविलक्षणं सज्जनहृदयमिति दर्शयति :—

सज्जनस्य हृदयं नवनीतं
यद् वदन्ति कवयस्तदलीकम् ।
अन्यदेहविलसत्परितापात्
सज्जनो द्रवति नो नवनीतम् ॥

---

## सुपुत्र-प्रशंसा ।

( २२३ )

सत्कुलं भूषणं पुंसः सद्भार्या कुलभूषणम् ।
सत्पुत्रभूषणा भार्य्या पुत्राः सन्मतिभूषणाः ॥

( हरिहरस्य )

---

## सुवैद्य-प्रशंसा ।

( २२४ )

मस्ते दुःसहवेदनाकवलिते भग्ने स्वरेऽन्तर्गले
तप्तायां ज्वरपावकेन च तनौ तान्ते हृषीकव्रजे ।
दूने बन्धुजने कृतप्रलपने धैर्यं विधातुं पुनः
कः शक्तः कलितामयप्रशमनाद् वैद्यात् परो विद्यते ॥

( वेङ्कटाध्वरिणः )

---

## सुसंसर्ग-प्रशंसा ।

( २२५ )

ज्ञानं वर्द्धयति श्रियं वितनुते वैदग्ध्यमासुञ्चति
श्रेयः पल्लवयत्यघानि दलयत्युन्मीलयत्युन्नतिम् ।
बुद्धिं संपरिशोधयत्युपचिनोत्युच्चैः कलाकौशलं
किं किं नारभते हरेरिव कथास्वर्य्या सतां सङ्गतिः ॥

---

## रस-तरङ्गः ।

### अद्भुत-रसः ।

( २२६ )

कस्मै किं कथनीयं
कस्य मनःप्रत्ययो भवति ।
रमयति गोपवधूटी
कुञ्जकुटीरे परं ब्रह्म ॥

---

### करुण-रसः ।

( २२७ )

अग्रे व्याधः करधृतशरः पार्श्वतो जालमाला
पृष्ठे वह्निर्दहति नितरां सन्निधौ सारमेयाः ।

एणी गर्भादलसगमना श्रावके रुद्धपादा
　　चिन्ताविष्टा वदति हरिणं किं करोमि क्व यामि ॥
　　　　　　　　　　　　　　　　　　( सातलस्य )

---

## शान्तरसः ।

### अनित्यता ।

( २२८ )

संसारिणामविद्याजनितं भ्रमं दर्शयति :—

जातोऽहं जनको ममैष जननी क्षेत्रं कलत्रं कुलं
　　पुत्रा मित्रमरातयो वसु गृहं भ्राता स्वसा बान्धवाः ।
संसारे शयने निमज्ज्य सुचिरं निद्रामविद्यामयीं
　　लब्ध्वा चित्त विघूर्णितं बहुविधान् स्वप्नानिमान् पश्यसि ॥
　　　　　　　　　　　　　　　　　　( कृष्णमिश्रस्य )

---

### उपदेशः ।

( २२९ )

संसार तव निःसारपदवी न दवीयसी ।
अन्तरा दुस्तरा न स्याद् यदि रे मदिरेक्षणा ॥
　　　　　　　　　　　　　　　　　　( भर्तृहरिः )

---

## कर्म्मफलम् ।

( २३० )

महतामाश्रयः कार्य्यः फलं भाग्यानुसारतः ।
शिवस्य कण्ठलग्नोऽपि भुजगो वायुभक्षकः ॥
( भर्त्तृसारस्वतस्य )

---

## कालचरित्रम् ।

( २३१ )

अशनं मे वसनं मे
जाया मे बन्धुवर्गो मे ।
इति मे मे कुर्व्वाणं
कालवृको हन्ति पुरुषाजम् ॥

---

## दैव-बलम् ।

( २३२ )

रामेण सीता कथिता त्वरस्व
सूर्य्येण तापैः परितापिताऽभूत् ।
पृथ्व्यापि विद्धा निजकण्टकैश्च
विधौ विरुद्धे स्वजनोऽपि शत्रुः ॥

---

## प्रार्थना ।

( २३३ )

भ्रान्तिकन्यालसत्कण्ठो मनःस्थालीमिलत्करः ।
त्रिपुरारिपुरद्वारि कदाऽहं मोक्षभिक्षुकः ॥

---

## विवेकः ।

( १३४ )

पुनःपुनर्भुवि क्षिप्तः पुनरेति स्वसन्निधिम् ।
मन्दकन्दुकवज्जातो मृत्योः क्रीड़नकं नरः ॥

( लक्ष्मणस्य )

( २३५ )

तच्छायायां परमां मन्ये यत् सुखं स्वजनादपि ।
निदाघवारणायाऽलं निजच्छाया न कस्यचित् ॥

---

## विषय-निन्दा ।

( २३६ )

न्यस्तं यथा मूर्ध्नि मुदाऽत्ति मेषो
दूर्वाञ्चितान्नं बलिकल्पितः सन् ।
मृत्युं समीपस्थितमप्यजानन्
भुङ्क्ते मनुष्यो विषयांस्तथैव ॥

---

## हास्य-रसः ।

( २३७ )

निन्दाच्छलेन रामं स्तौति :—

> साधु साधु रघुनाथ यत् त्वया
> पर्य्यणायि जनकस्य कन्यका ।
> कार्य्यमेतदपरेण दुष्करं
> युक्तमेतदजवंशजन्मनः ॥

---

## विविध-तरङ्गः ।

### आयव्ययौ ।

( २३८ )

> इदमेव सुपाण्डित्यं चातुर्य्यमिदमेव च ।
> इदमेव सुबुद्धित्वमायादल्पतरो व्ययः ॥

---

### उपनेत्रम् ।

( २३९ )

यो हि परमुखेन कस्यचिद् वृत्तान्तमवगम्य प्रशस्यं तं निन्दति निन्द्यं वा स्तौति तं प्रत्युक्तिरियम् :—

> दृश्यतेऽणुर्महत्त्वेन महानणुतया त्वया ।
> दिष्ट्या दृष्टेनं दोषोऽयं दोषोऽयमुपचक्षुषः ॥

---

## कण्टकः ।

( २४० )

सुमुखोऽपि सुवृत्तोऽपि सन्मार्गपतितोऽपि सन् ।
साधूनां पादलग्नोऽपि व्यथयत्येव कण्टकः ॥

---

## कस्तूरी ।

( २४१ )

अयि बत गुरुगर्वं मा स्म कस्तूरि कार्षी-
रखिलपरिमलानां मौलिना सौरभेण ।
गिरिगहनगुहायां लीनमत्यन्तदीनं
स्वजनकममुनैव प्राणहीनं करोषि ॥
( पण्डितराजजगन्नाथस्य )

---

## कुम्भः ।

( २४२ )

दृढतरगलविनिबन्धः
कूपनिपातोऽपि कलस ते धन्यः ।
यज्जीवनदानैस्त्वं
तर्षामर्षं नृणां हरसि ॥

---

## गोपी-यन्त्रम् ।

( २४३ )

अलावुतन्तुकाष्ठानां संयोगे मधुरध्वनिः ।
भिक्षापात्रं कटीसूत्रमिन्धनञ्च पृथग् यदि ॥

---

## घटिका-यन्त्रम् ।

( २४४ )

कदाचित् महाराजकृष्णचन्द्रेण कवे कथय तावत् घटिकायन्त्रं रात्रिन्दिवं कथं ध्वनतीति पृष्टो वाणीश्वरविद्यालङ्कारस्समुवाच :—

अलभ्यं यदायुःपलैःस्वर्णभारै-
रहो तस्य दण्डो वृथा याति यामः ।
दिनञ्च त्रियामा प्रमादान्नराणा-
मितीवानिशं घोषयन्ती घटीयम् ॥

( वाणीश्वर विद्यालङ्कारस्य )

---

## जिह्वा ।

( २४५ )

अद्भुतमेतद् यद् दन्तैर्न जिह्वा दश्यते इत्याह :—

द्वात्रिंशद्दशनद्वेषिमध्ये भ्रमसि नित्यशः ।
तदिदं शिक्षितं केन जिह्वे सञ्चारकौशलम् ॥

---

## तमाखुः ।

( २४६ )

उक्तिप्रत्युक्ती :—

भ्रातः कस्त्वं तमाखुर्गमनमिह कुतो वारिधेः पूर्वपारात्
कस्य त्वं दण्डधारी नहि तव विदितं श्रीकलेरेव राज्ञः ।
चातुर्वर्ण्यं विधात्रा विविधविरचितं धर्म्मकर्म्मप्रभेद-
मेकीकर्त्तुं बलात् तन्निखिलजगति तच्छासनादागतोऽस्मि ॥

---

## तुलादण्डः ।

( २४७ )

गुरुषु मिलितेषु शिरसा
प्रणमसि लघुषून्नता समेषु समा ।
उचितज्ञासि तुले किं
तुलयसि गुञ्जाफलैः कनकम् ॥

---

## दुग्धम् ।

( २४८ )

सहजमाधुर्य्यं न कथमपि विचलतीत्याह :—

को हि तुलामधिरोहति
शुचिना दुग्धेन सहजमधुरेण ।
तप्तं विकृतं मथितं
तथापि यत् स्नेहमुद्गिरति ॥

---

## धनुर्बाणौ ।

( २४९ )

कोटिद्वयस्य लाभेऽपि नतं सद्वंशजं धनुः ।
असद्वंश्यः शरः स्तब्धो लक्षलाभाभिकाङ्क्षया ॥

---

## धूमः ।

( २५० )

धूमः पयोधरपदं कथमप्यवाप्य
वर्षाम्बुभिः शमयति ज्वलनस्य तेजः ।
दैवादवाप्य ननु नीचजनः प्रतिष्ठां
प्रायः स्वबन्धुजनमेव तिरस्करोति ॥

---

## नखरञ्जनी ।

( २५१ )

शब्दश्लेषलोलुपः कविरुत्तमाधमयोरभेदं दर्शयति :—

अनन्तचरणोपान्तचारिणी मलहारिणी ।
पुनर्भवच्छेदकरी गङ्गेव नखरञ्जनी ॥

( वाणीश्वर विद्यालङ्कारस्य )

---

## नस्यम् ।

( २५२ )

नस्यं भूसुरसूरिसेवितमलं नस्यं सुसेवे स्वयं
नस्येनैव विकाशते कविकुलं नस्याय तस्मै नमः ।
नस्यात् प्रस्यतरं न चास्ति भुवने नस्यस्य वश्योऽस्म्यहं
नस्ये मे नियतं विराजतु मनो हे नस्य मामुद्धर ॥

( उद्भटसागरस्य )

---

## नौका ।

( २५३ )

नौका च खलजिह्वा च प्रतिकूलप्रवर्त्तिनी ।
प्रतारणाय लोकानां दारुणा केन निर्मिता ॥

---

## प्रदीपः ।

( २५४ )

( क )

प्रदीपं लक्ष्यीकृत्य उपदिशति :—

रक्ष पात्रगतं स्नेहं दीप स्वश्रीविवर्द्धनम् ।
प्रयास्यन्ति विना तेन भस्मत्वं भवतो गुणाः ॥

( महादेवस्य )

( ख )

आश्रितवात्सल्यं शत्रोरपि हृदयमधिकरोतीत्याह :—

हन्याद्‌ द्विषमविनीतं
किन्तु न शरणागतं द्विषं हन्यात् ।
दीपस्तिमिरविनाशी
दलयति नाधोगतं तिमिरम् ॥

---

## बड़िशदण्डः ।

( २५५ )

यत् सद्गुणोऽपि सरलोऽपि तटस्थितोऽपि
वंशोद्भवोऽपि विदधासि नृशंसकर्म्म ।
वक्रात्मनो बड़िशदण्ड तदेव तस्य
जानामि सङ्गतिफलं तव कण्टकस्य ॥

---

## मध्यस्थः ।

( २५६ )

जलस्य वह्निना वैरं विधात्रा परिकल्पितम् ।
दुग्धात्तं यदि मध्यस्थं नृणां भोगाय कल्पते ॥

---

## विधि-विडम्बनम् ।

( २५७ )

पृष्ठेन कुब्जश्चरणेन खञ्जो
नेत्रेण काणो रसनेन मूकः ।
कायेन खर्वः श्रवणेन चैडो
नसाऽवनाटो विधिवञ्चितो यः ॥
( उद्भटसागरस्य )

---

## विवाह-पणः ।

( २५८ )

कन्यायै रोचते रूपं मात्रे च मोदते धनम् ।
ताताय स्वदते शास्त्रं वरस्योपयमोत्सवे ॥
( उद्भटसागरस्य )

---

## सुजन-दुर्जन-पार्थक्यम् ।

( २५९ )

( क )

आकोपितोऽपि सुजनो मधुरं हि रौति
निष्पीड़ितो मधुरमुद्गिरते यथेक्षुः ।
नीचो जनो गुणशतैरपि पूज्यमानो
हास्येन यद् वदति तत् कलहेऽप्यवाच्यम् ॥

( ख )

सरलयो: खलु सख्यमनारतं
कुटिलयोर्घटनैव न जायते ।
यदि भवेत् सरले कुटिले तदा
न चिरमस्ति धनु:शरयोरिव ॥

---

## स्वभावाख्यानम् ।

( २६० )

साधुरेव न जहाति साधुतां
दुर्ज्जनेन सह सम्मिलन्नपि ।
जन्मत: प्रभृति काकसङ्गत:
पश्य रौति मधुरं हि कोकिल: ॥

---

इति द्वितीय-प्रवाह: समाप्त: ।

---

# परिशिष्टम् ।

## द्वितीय-प्रवाहः ।

### टिप्पनी ।

(१) ब्रह्माभिधेयं—परब्रह्मसंज्ञकम्। महः—ज्योतिः। एते व्याधि[illegible] यथा दुःखनिवृत्तये वैद्यादीन् स्मरन्ति तथाऽहमपि आत्यन्तिकदुःखान्धकारदूरीकरणाय एकं शरण्यं तत्तेजः स्मरामीत्यर्थः।

(२) कुलशैलदलं—कुलशैलाः अष्टकुलपर्वता एव दलानि पत्राणि यस्य तत्। पूर्णम्—अखण्डम्। सुवर्णगिरिकर्णिकं—सुवर्णगिरिः सुमेरुरेव कर्णिका बीजकोषो यस्य तत्। अनन्तनालं—अनन्तः विष्णुः एव नालं यस्य तत्। कमलविष्टरम्—पद्मासनम्।

(३) स्फाटिकीं—स्फटिकमयीम्। अक्षमालां—जपमालाम्। नखकिरण-विमिश्राम्—करतलरश्मिमिश्राम्। प्रतिपलं—प्रतिक्षणम्। कीरः—शुकपक्षी। भूत्यै—मङ्गलाय।

(४) वृत्तिः—वर्त्तनं व्यवहारादिकमित्यर्थः। स्व[illegible]—स्वाधीना। स्नुषाणाम्—पुत्रवधूनाम्। सरस्वती ब्रह्मणः पत्नी; विष्णोर्नाभिकमलात् जात इति विष्णुर्ब्रह्मणः पिता लक्ष्मीश्च माता। अतएव लक्ष्मीः सरस्वत्याः श्वश्रूरिति सङ्गच्छते। पण्डितोऽपि निर्धनो नाद्रियते इति श्लोकार्थः।

(५) अलक्ष्मीश्च पलायते अपगता भवति। लक्ष्मीश्चापि न चपलायते चञ्चला न भवति।

(६) खरतरशरहतसुरपरभेथन,—"सुशाणितशरैः हतं सुरपराणां सुरवैरिणाम् असुराणां मथनं येन तत्सम्बोधने। "अतिघातिपरारातिप्रत्यर्थिपरिपन्थिनः"—इत्यमरः। खगचर—गरुड़यान। नगधर—गोवर्द्धनगिरिधारिन्। फणधरशयन—शेषशय्य। परपदलयकर—मोक्षपददायक। भवदरशमन—भवभयनाशक। "जगदघम् अपहर—जगतः समस्तं पापं दूरीकुरु त्वमिति शेषः। सरसिजनयन—पद्मनेत्र।

(९) नाथे—स्वामिनि नारायणे इत्यर्थः। कृतपदघातः भृगुमुनिरित्यर्थः। चुलुकिततातः—चुलुकितः गण्डूषेण पीतः तातः पिता समुद्रः येन सः अगस्त्य इत्यर्थः। सपत्निकासेवी—सरस्वतीसेवकः पण्डित इत्यर्थः।

(१०) विष्णोरुरसि—नारायणस्य वक्षःस्थले। कुम्भसम्भवमुनिः—अगस्त्यः। तातं पितरं समुद्रमित्यर्थः।

(११) लक्ष्मीर्यावत् सदया तावत् भवनं, वधूः, सुखं, पौरुषान्विततनुः, जनादरः, एतानि सुलभानि भवन्ति। चेत् सा न तथा कृपावती, तदा एतेषां पदानां प्रथमवर्ण-परित्यागे यत् भवति तदेव स्यात्। वनम् अरण्यं, धूः भारः सकलमेव कष्टकरम्, खम् आकाशं सर्व्वं शून्यम्, रुषान्विततनुः क्रोधपूर्णदेहः, नादरः सर्व्वत्र सम्मानाभावः।

(१२) द्रविणं—धनम्। मत्सरः—विद्वेषः। मत्सरिणी—विद्वेषकारिणी।

(१३) कन्धरां—ग्रीवाम्। शेष—हे अनन्त।

(१५) राजमणिः—राजश्रेष्ठः। रमेशं—रमायाः ईशं पतिं नारायणमित्यर्थः। निशाचरचमूः—राक्षससैन्यानि। शुभायनं शुभं मङ्गलदायकं अयनं आश्रयः।

(१६) दारुदृषदस्य—"जातिरप्राणिनाम्" इति द्वन्द्वैकवद्भावः, "द्वन्द्वाच्चुदषहान्तात् समाहारे" इति समासान्तष्टच्।

(१८) स्वरोचिषा—निजकिरणेन। अलङ्करोति—प्रकाशयति। तदन्वये—तद्वंशे सूर्य्यकुले इत्यर्थः। द्विशरशताङ्गः—द्विशरः दशपूर्वः शताङ्गः रथः दशरथ इत्यर्थः। एकराट्—एकाधिपतिः। स्वरविगर्के—स्वरयोर्वैपरीत्येन ग्रहणे।

(२०) ताताज्ञया—पितुरादेशेन। तात—वत्स। व्याजेन—छलेन। पुरःसरन्तु—पुरःसराः अग्रगामिनः अनुचरा इति आचरन्तु, क्विबन्तनामधातो रूपम्।

(२३) सिता—शर्करा। अपविद्या—अविद्या, अज्ञानता इत्यर्थः। "देहोऽहमिति या बुद्धिरविद्या सा प्रकीर्त्तिता"। रोचिका—रुचिकरी।

(२४) अरुणः—सूर्य्यः, तत्समानवर्णत्वादत्र कृष्णपदतलमित्यर्थः। विधुपाली—चन्द्रश्रेणी, तदाकारत्वादत्र कृष्णपदनखपङ्क्तिरित्यर्थः। तमःस्तोमः—अन्धकारराशिः अत्र कृष्णस्य चरणोपरिभागः। एते परस्परं शत्रुभावापन्ना अपि कृष्णचरणमाश्रित्य सहवसन्ति। शात्रवम्—शत्रुता।

(२६) भूमिकाः—कृमिकीटपतङ्गादिरूपान्तरपरिग्रहरूपाः। व्योमाकाशखखाम्बराब्धिवसवः—अङ्कस्य वामगत्या चतुरशीतिलक्षसंख्यका ( ८४००००० ) भूमिका इत्यर्थः। मानय—मा आनय।

(२८) सीवति—वोपदेवमते सेवधातुरुभयपदी ।

(३३) हरि हरीति—खेदसूचकमव्ययम् ।

(३५) तनूरुहकुहरे—लोमकूपे । नटनं—नर्त्तनम् । तमिभं—शीघ्रमिति शेषः ।

(३६) गुणवत् गुणविशिष्टं चेतः । अगुणं—सौन्दर्य्यादिगुणरहितम् अङ्गम् ।

(३७) औत्पातिकम्—अमङ्गलम् । कादम्बरी—मद्यविशेषः । लाङ्गलभृतः—हलिनः बलरामस्य इत्यर्थः ।

(४०) कौ पृथिव्यां कोऽपि अपूर्व्वः कापालिकः कपालपाणिः कश्चित् देव; शिव इत्यर्थः कुशलं कलयतु । कल्पान्ते प्रलये क्रूरः संहारकारकः केलिः क्रीड़ा यस्य सः । क्रतुकदनकरः—यज्ञविनाशकः । कलितः स्वीकृतः कुमुदिनीकामुकः चन्द्रः येन सः । कङ्कालक्रीड़नोत्कः—कङ्कालैः अस्थिभिः क्रीड़ने खेलायां उत्कः उत्सुकः । कलित-कलकलः—कलिता अवलम्बिता: कलेन मधुरास्फुटध्वनिना कलाः नृत्यगीतवाद्यादिरूपाः येन सः, अथवा कलितः गृहीतः कलकलः कोलाहलो येन । काली कृष्णवर्णा काली कलत्रं यस्य तादृशः । कालिन्दीव कालः कृष्णः कण्ठो यस्य सः ।

(४१) दोषाकरः—चन्द्रः ; पक्षे दोषाणामाकरः । द्विजिह्वः—सर्पः ; पक्षे द्विभाषी । पाषाणजा—पार्व्वती ; पक्षे कठिनहृदया । पशुः—वृषः । अन्तरङ्गः—आत्मीयः प्रिय इत्यर्थः ।

(४५) धूर्ज्जटिमूर्द्धनि—शिवमस्तके । मध्यस्था—मध्यदेशवर्त्तिनी, पक्षे विवाद-नाशिनी । वैधवी—विधुसम्बन्धिनी । मिलनात्—मुग्धबोधमते मिलधातोः पाचिक-कुटादित्वात् मिलनं मेलनमिति रूपद्वयसिद्धिः । तथाच—"महापातकिनः पश्च मिलितव्यं न तैः सह"—इति शिष्टप्रयोगः ।

(४६) मृड़म्—महादेवम् । उडुपरिवृढ़चूडम्—उडूनां नक्षत्राणां परिवृढ़ः अधिपतिः चन्द्र इत्यर्थः, स एव चूड़ायां यस्य तम् ।

(४७) विषमनयना—त्रिनेत्रा वक्रदृष्टिश्च । कपिवरमुखः—नन्दी ; तस्य वानरवन्मुखमिति प्रसिद्धिः ।

(४९) उज्झित्वा—त्यक्त्वा । वासः—वस्त्रम् । पितृवने—श्मशाने । वास-रसं—वसतिसुखम् । श्रीखण्डसारद्रवैः—चन्दनरसैः ।

(५०) सीमन्तिनी—सीमन्तः केशविन्यासः, सोऽस्या अस्तीति सीमन्तिनी रमणी । त्रिलोकरक्षां—त्र्यवयवो लोकस्त्रिलोक इति शाकपार्थिवादित्वात् समासः, तस्य रक्षा

नाम् ; अथवा त्रयाणां लोकानां रक्षा तामिति उत्तरपदे परे द्विगुः। कपालपाणिः—कपालः भिक्षाभाजनं पाणौ यस्य तादृशः सन्। ललाटलेखः—विधिकृता ललाटलिपिः। न पुनः प्रयाति—अन्यथा सन् न याति, अन्यथा न भवतीत्यर्थः।

(५३) दण्डी—कालः। एते सदैव तं रक्षन्ति।

(५४) ह्रीरूपा—लज्जारूपा। दिगम्बरा—नग्ना। क्रमते—पादेनाक्रामति। "अनुपसर्गाद्वा," इति पाक्षिकात्मनेपदम्।

(५५) अखिलेषु गलेषु—पञ्चवक्त्रत्वात् पञ्चषु कण्ठेषु। हिमशैलजा—हिमालयजाता दुर्गा। लीलया—विलासेन।

(५६) कालकूटकवलज्वालानां अपनुत्त्यै अपनोदनाय। तत्—अङ्घ्रिपुष्कमलम्।

(५७) स्वर्गौकसां—देवानाम्। स्तुतिगिरा—स्तोत्रवाक्येन। संग्राममुक्तवसना—संग्रामे मुक्तं वसनं यया तादृशी।

(५८) विधेः कुण्ड्यां—ब्रह्मणः कमण्डलुमध्ये। गर्भाग्निविध्वंसिनी—मुक्तिदायिनी।

(६२) गन्धः—लेशः। एषां व्याघ्री यं ग्रसति तस्य जन्मान्तरपरिग्रहेण देहसम्बन्धो न भवति, तदस्यायित्वरूपत्वमिति।

(६३) जीवनं—जलम् ; पक्षे प्राणान्।

(६६) विहगपुङ्गवपुङ्गववाहनं—विहगः पुङ्गव इव विहगपुङ्गवः खगश्रेष्ठो गरुड़ः, पुमान् गौः पुङ्गवो वृषभश्च तौ वाहने यस्य तत्। मकरकुण्डलि—मकराकृति कुण्डलधारि। कुण्डलिकुण्डलि—कुण्डली सर्पः स एव कुण्डलं, तद्विशिष्टम्। चन्द्रकिचन्द्रकि—चन्द्रकिनः मयूरस्य चन्द्रकः पुच्छमिति यावत्, तद्विशिष्टम्। चन्द्रकि—चन्द्रकश्चन्द्रः सोऽस्यास्तीति, चन्द्रशोभितमित्यर्थः।

(६७) अम्ब—मातः। रन्तुं—क्रीड़ितुम्। मुषली—बलरामः। व्यादेहि—विस्तृतं कुरु आननमिति शेषः।

(६८) विधुरा—कातरा। जनयित्रि—जननि। गिरीशः—हिमालयः शिवश्च। प्रोन्मीलेत्यादि—प्रकर्षेण उन्मीलत् यत् स्मितं तेन मुग्धं मनोहरं ( लज्जया ) नम्रञ्च वदनं यस्याः सा तथोक्ता।

(६९) त्रिपादैः—त्रिसंख्यकाः पादाः तैः।

(७०) किं तथासौ बभाषे—असौ तातः किं कथं तथा बभाषे उक्तवान्।

(७१) वारिदसम्भ्रमात्—मेघभ्रान्त्या। शुक्तमित्यादि राधाया उक्तिः। तक्रः—तक्रं 'घोल' इति भाषा।

(७२) कुम्भीशः—करीन्द्रः। हरिमध्यकम्—सिंहकटिदेशः। विधिकृतम्—मम एतत् सर्व्वं विधात्रा निर्म्मितं तत्र मे को दोष इति भावः।

(७३) पण्यवीथिकां—विपणिम्। नन्दगोपगृहस्थितां पण्यवीथिकाम्; पक्षे नन्दगोपगृहमेव पण्यवीथिकाम्। आलि—सखि। उज्ज्वलगुणं—गुणः सूत्रम्; पक्षे दयादाक्षिण्यादिगुणः। केशबन्धनं—केशबन्धनसाधनं केशनिर्म्मितं डोरकम्; पक्षे केशवं कृष्णरूपं धनम्।

(७६) लक्ष्मीरुवाच—कस्त्वम्। नारायणः प्रत्युवाच—चक्री सुदर्शनचक्रधारी अहम्। कुम्भकारोऽपि चक्रीत्युच्यते, तथाच मेदिनी "चक्री तैलिकभित्कोककुलालाजाहिसूचके" इति; इत्येतमर्थं घटयित्वा लक्ष्मीरुवाच—मम घटाद्यर्थिता घटादिभिः प्रयोजनमित्यर्थः नहि न विद्यते। एवमर्थान्तरं शङ्खादिपदेष्वपि ज्ञेयम्। तत्तत् अर्थान्तरमाकलय्यैव लक्ष्म्या उक्तिपरम्परा। शङ्खी—पाञ्चजन्यनामकशङ्खधारी; पक्षे नरशिरोऽस्थिधारी। अशिवम्—अमङ्गलम्, शवास्थिधारी अशुचिरमङ्गलश्च इति भावः; पक्षे शिवादन्यम्, नरकपालधारी सन्नपि शिव एव परमं शुचिः, तदन्यः सर्व्वः अशुचिरिति भावः। गदी—कौमोदकीनामकगदाधारी; पक्षे गदो रोगोऽस्यास्तीति गदी। खड्गी—नन्दकनामकखड्गधारी; पक्षे गण्डकः 'गण्डार' इति भाषा ( गण्डका हि प्रायः पुष्करिण्यादौ मग्नास्तिष्ठन्ति )। पद्मी—पद्मधारी; पक्षे हस्ती। तदेहि—तदा इहि गच्छ; पक्षे तत् तदा वा एहि आगच्छ। पद्माकरम्—तड़ागम् ( हस्तिनो हि प्रायः तड़ागादौ जलक्रीड़ां कुर्व्वन्ति मृणालादिकं भक्षयन्ति च ); पक्षे पद्मायाः लक्ष्म्याः करं पाणिम्। प्रापत्—धृतवानित्यर्थः।

(७७) भिक्षुः—शिवः, त्रिपादपरिमितभूमिप्रार्थी वामनश्च। मखे—बलेर्यज्ञे। पशुपतिः—शिवः; गोपालकः कृष्णश्च। पन्नगभूषणः—सर्पवेष्टितः शिवः; पक्षे सर्पोपरि शयानः विष्णुः। शेते स शेषोपरि—विष्णोरनन्तशय्या प्रसिद्धैव। विषादं—विषभक्षकं शिवम्, दुःखञ्च।

(७८) गङ्गाधरपत्नि—सपत्नीविशिष्टे। सापि स्वामिनस्तव शिरसि वर्त्तते इति अभिप्रायः। चक्रिवधु—चक्रिणः विष्णोः छलनाप्रियस्येति अभिसन्धानम्। नर्त्तकः—शिवस्य ताण्डवं प्रसिद्धम्। सर्पक्रतुकौ शिवस्य सर्पभूषणत्वात्, विष्णोश्च कालिय-

निग्राहकत्वात्। विषादी—विषं गरलम् अत्तीति गरलपायी। वकी—पूतना, तस्या विषलिप्तं स्तनं कृष्णः पपौ।

(८०) मौली—मस्तके। नीलेत्यादि—अलकाश्चूर्णकुन्तलाः, वेणिका—विन्यस्तकेशपाशः ; अलकसहिता वेणिका, पश्चान्नीला अलकवेणिका नीलालकवेणिका। वीचिदः—तरङ्गः। शफरी—मत्स्यविशेषी। रथाङ्गद्वयं—चक्रवाकयुगलम्।

(८१) पार्वती प्राह हे अन्धकारे अन्धकस्य तन्नामकासुरस्य अरिः शिवः तत्सम्बुद्धिः मूर्ध्नि इयं का। मूर्ध्नि अन्धकारे तमसि इयं का इत्येवं पार्वतीप्रश्नार्थं घटयित्वा शिवेनोक्तं हे सुभ्रु कान्तः सुन्दरः इन्दुः तेन युक्ते इह मूर्ध्नि तिमिरं कुतः नास्त्येव तिमिरमित्यर्थः। पार्वती तु कान्तेन्दुयुक्ते इत्यस्य कान्ता च इन्दुश्च ताभ्यां युक्तं तस्मिन् मूर्ध्नि इत्यर्थमाकलय्याह कान्तेत्यादि ; अपि प्रश्ने अत्र शिरसि काचित् कान्ताऽस्ति। ननु भवतु—एवमितिशेषः, ननुशब्दोऽत्र आक्षेपे। एतावदेव—कैयं कान्ता इत्येव। द्वन्द्वं—'कान्तेन्दुयुक्ते' इति पदे द्वन्द्वसमासम्, पक्षे त्वया सह कलहम्। अपनय—दूरीकुरु। प्रतिवचनजितः—प्रत्युत्तरदाने पराभूतः।

(८२) पशुपतिः—शिवः, पक्षे पशूनां राजा। हरिः—सिंहः। देवोमापतिः—देवः उमापतिः शिवः, अहमिति शेषः, एवं परत्र ; पक्षे देवः मापतिः मा लक्ष्मीस्तस्याः पतिः विष्णुः। शूली—शिवः, पक्षे शूलरोगाक्रान्तश्च। भीमः—संहारकर्त्ता शिवः, पक्षे द्वितीयपाण्डवश्च। तत्परिहासेत्यादि—तस्याः पार्वत्याः परिहासक्रीडाच्छलेन। मुग्धः हतबुद्धिः प्रतिवक्तुमक्षम इत्यर्थः।

(८३) इदं—निष्ठुरत्वम्। निःस्नेहा—प्रेमशून्या। भस्मपरुषः—करीषकर्कशः। स्नेहं—तैलादिद्रववस्तु। विन्दति—लभते। निष्फलः—अकारणः। स्थाणोः—शिवस्य ; पक्षे शाखादिरहितद्रुमस्य।

(८४) शूली—शिवः शूलरोगी च। मृगयेति अदन्तचुरादिमृगधातोः परस्मैपदित्वाभावात् अन्वेषणार्थमृगशब्दात् करोत्यर्थे णिचि मृगेति नामधातोर्लोटि रूपम्। नीलकण्ठः—शिवः मयूरश्च। पशुपतिः—शिवः सिंहश्च। स्थाणुः—शिवः निःशाखवृक्षश्च। शिवायाः—पार्वत्याः शृगाल्याश्च। जीवितेशः—पतिः। हतवचाः—निर्वाक्।

(८५) ज्वलनात्—अग्नेः। वैश्रवणात्—कुवेरात्। रामजनार्दनाभ्यां—परशुरामनारायणाभ्याम्।

(९०) खड्गिभिः—खड्गधारिभिः रक्षकैः ; पक्षे गण्डकैः। गजैः—हस्तिभिः ; पक्षे वानरविशेषैः। कञ्चुकिभि—अन्तःपुरचारिभिः कार्य्यकुशलवृद्धविप्रैः द्वारपालैर्वा ; पक्षे सर्पैः। महिषीभिः—कृताभिषेकाभिः रमणीभिः ; पक्षे महिषस्त्रीभिः। त्वद्विद्विषां मन्दिरे शून्येऽपि सर्वमित्यन्वयः।

(९१) तिमिरारिः—सूर्य्यः। शङ्कितमानसाः—अस्माकच्च तिमिरवर्णतया यद्यस्मानपि हन्यादिति भीतचित्ताः। रटन्ति—शब्दायन्ते। प्रगे ( अव्ययम् )—प्रत्यूषे। द्विकाः—काकाः।

(९२) पक्षग्रहः—उड्डयनपक्षावलम्बनम्। गिरं—वाचं। ध्वाङ्क्ष—काक। उन्नाटयन्—अभिनयन् अनुकुर्व्वन्नित्यर्थः।

(९४) कुहुम्—नष्टेन्दुकलाम् अमावस्याम्। “सा दृष्टेन्दुः सिनीवाली सा नष्टेन्दुकला कुहूः” इत्यमरः ( सा अमावस्या )। भ्राम्यति—भ्रमणं कुर्व्वति सति। गूढ़पुरुषाः—चराः। सम्भ्रमात्—त्वरया। त्वरावशतः ‘अत्र अत्र इतः इतः’ इत्येतानि पदानि अनुच्चार्य्य केवलं कुहुः कुहुरिति भावः।

(९५) चक्रवाकमिथुनं रात्रौ एकत्र न वसतीति प्रसिद्धिः।

(९६) कवलितं—भुक्तम्। कन्दलं—नवाङ्कुरः। कुमुदकोषे—कुमुदकुसुमाभ्यन्तरे। सहचरपरिमुक्ता—चक्रवाकविरहिता।

(९७) जीवनेन—जीविकया जलेन च। कौलव्रतोच्छेदप्रसङ्गः—वंशपरम्परागतनियमभङ्गप्रसक्तिः। परदुःसहः—अतिक्लेशकरः। अतएव चातकः प्राणान्तेऽपि वृष्टिजलं विना नान्यज्जलं पिबतीति भावः।

(१००) जानीते—अम्भोनिधेर्गाम्भीर्य्यमिति शेषः। कोलावतारः—वराहावतारः।

(१०१) कर्दमपानीयं—कर्दममिश्रं पानीयमिति मध्यपदलोपी कर्म्मधारयसमासः। मकमकायते—मकमकेति शब्दं करोति सगर्व्वमिति शेषः। “अव्यक्तानुकरणाद्” इत्यादिना मकशब्दात् डाच् द्वित्वञ्च, ततो “लोहितादिडाज्भ्यः क्यष्” इति क्यष्।

(१०२) मज्जनः—ममावासस्थानात्। वाढ़ं—स्वीकारे। दर्दुरः—भेकः।

(१०५) केकिवर—मयूरराज। गोपालमौलिमुकुटे—श्रीकृष्णस्य मस्तकस्थे मुकुटे।

(१०६) केका—मयूरस्य कण्ठरवः। कवरी—रमणीनां केशविन्यासः। कलापाः—मयूरपुच्छानि। द्विजिह्वः—सर्पः। पिशितैः—मांसैः। चित्तवृत्तम्—मनसि स्थितम्, अभिलषितमिति यावत्।

(१०७) एतत्—पूर्व्वोक्तं वचनम्। संक्षिप्य संसम्भ्रमात्—अतित्वरया लघूकृत्य। श्लोकेन भूयसोऽभिधानं संक्षेपः। के-का इति वचनेनैव निर्घोषदित्यादिवचनानामपि अभिधानं भवतीत्यर्थः। उन्नतशिरः—ऊर्द्धीकृतमस्तकं सत्। केका—"केका वाणी मयूरस्ये"त्यमरः। रुषा—क्रोधेन। वर्षासु पतिपत्नीनां विरहः अनुचित इति भावः।

(१०९) सिंहिका—सिंही ; पक्षे राहुमाता। साश्रयं—आश्रयश्चन्द्रस्तेन सहितम्।

(११०) प्रत्याशम्—प्रतिदिशम्। प्रतिपद्धति—प्रतिपथम्। चञ्चूर्थमाथः—गर्हितं चरन्। अध्वगान्—पान्थान्। फेरव—हे शृगाल।

(१११) मलयजगणैः—चन्दनवृक्षसमूहैः। क्षुन्निर्वाहः—क्षुधाशान्तिः। प्रयतपवनैः—विशुद्धवायुभिः। आशीविषः—सर्पः। आशिषि आश्यां वा दंष्ट्रायां विषं यस्येति व्युत्पत्तिः।

(११२) एणः—हरिणः। द्वीपी—व्याघ्रः। क्रोष्टा—शृगालः। वल्गति—प्लवेन गच्छति। रुरुः—मृगविशेषः। करिपोतकैः—हस्तिशावकैः।

(११३) नीरजराजितं—पद्मसुशोभितम्। मानसं—चित्तं ; पक्षे मानसनामकः सरोवरः।

(११४) विकचपङ्कजालिस्खलत्परागधवलीकृते—विकसितपद्मसमूहेभ्यः पतत्पुष्पपरागैः शुभ्रीकृते। विवदने—विमुखे। विधौ—विधातरि।

(११६) दानार्थिनः—मत्तहस्तिनो गण्डनिःसृतं मदजलं पिपासवः। मदान्धबुद्ध्या—मदेन अन्धा सदसद्विवेकहीना या बुद्धिस्तया। अनेन भृङ्गदूरीकरणेन करिवरस्यैव क्षतिर्न पुनर्भृङ्गाणां, यतस्ते हस्तिमदवत् कमलमकरन्दमपि पिबन्ति। एकस्मिन् द्वारे रुद्धे शतं द्वाराण्युद्घाटितानि सन्ति याचकानामिति भावः।

(११७) दलसन्दोहैः—पत्रसमूहैः। कुजन्मनः—कुत्सितं जन्म यस्य स तस्य ; पक्षे कौ पृथिव्यां जन्म यस्य तस्य। कुपुरुषस्य यथा कुजन्मतस्तरोरपीति श्लेषः।

(११९) अक्षेत्रपतितः—अस्थानपतितः। मरुभुवः—मरुप्रान्तरस्य।

(१२४) गिलिताकाशाः—गिलितः स्पृष्ट इत्यर्थः आकाशो यैस्ते, गगनस्पर्शिनः। जनताचेतोनन्दनः—जनसमूहस्य चित्तानन्ददायकः।

(१२५) तर्पिताः—प्रीणिताः। वासिताः—सुरभीकृताः। अपहर्त्तुं—परिहर्तुम्। ईहते—चेष्टते। क्षुत—क्षुधा। न लगति—न प्राप्नोति। फलाभावात् क्षुधां निवारयितुमक्षमत्वं क्षुधार्त्तैरगत्या परित्यज्यसे न तु स्वेच्छयेति भावः।

(१२६) जगत्प्राणः—वायुः। जीवनं—जलं ; पक्षे , यमदूतिका—यमालय-प्रापिका ; पक्षे तिन्तिड़ी।

(१२७) अतिमाधुर्य्येण शितपीयूषस्य पनसस्य कण्टकिफलस्य। मातुलपुत्रकस्य—धुस्तूरपुष्पस्य।

(१२६) तरलीभवन्ति—आलोकदानाय समन्तात् सञ्चरन्ति। कोकः—चक्रवाकः। शोकं—चक्रवाकीविच्छेददुःखम्। मत्तमनसः—हृष्टचित्ताः। क्रौं—तदाकारसव्यक्तशब्दम्। कौशिकाः—पेचकाः। सदसद्विवेकविधुरः—भद्राभद्र-विवेचनाविरहितः। इतीव—इति मत्वेव। मुद्रितवती—निमीलितवती। पद्मेक्षणं—पद्ममेव ईक्षणं चक्षुः। दिनावसाने प्रकृत्या मुद्रितस्य पद्मस्य इत्थं भावान्तरं कविरुत्प्रेक्षत।

(१३०) किंशुकी—पलाशतरौ। बाह्यरङ्गप्रपञ्चेन—बहिःप्रकटितसुन्दरवर्ण-विस्तारेण।

(१३१) शाखेत्यादि—शाखानां सन्तत्या विस्तारेण सन्निरुद्धं समाच्छादितं नभः गगनं येस्ते। अविकलैः—अविकृतैः शोभनैरित्यर्थः। आर्त्तिच्छिदः—पीड़ापनोदकाः। द्वित्रदलैः—द्वे वा त्रीणि वा द्वित्राणि, तानि दलानि तैः द्वित्रदलैः। शालेः—हैमन्तिक-धान्यस्य। स्तुमः—प्रशंसामः। तुङ्गतां—औन्नत्यम्। सुकृतिना—पुण्यकर्मणा।

(१३२) सङ्कोचं—क्षुद्रत्वम्। अञ्चति—प्राप्नुवति। दीनदीनः—दीनेभ्योऽपि दीनः।

(१३३) पूरः—जलोच्छ्वासः। तटिनि—हे नदि। तटेत्यादि—तटद्रुमाणां तीरस्थवृक्षाणां पातनेन यत् पातकं पापं तत्।

(१३४) उदयन्ते—उद्गच्छन्ति, उत्पद्यन्ते इति यावत्।

(१३५) मधुरनिस्वनैः—मधुरैः श्रोत्रसुखैः निस्वनैः शब्दैः। विधुरं—जलार्थं कातरं मामिति शेषः। आश्वसिषि—आश्वस्तं करोषि। आदरात्—आदरं प्रदर्श्येत्यर्थः।

(१३६) नभसि—आकाशे। निरवलम्बे—निराधारे। सीदता—अवतिष्ठ-मानेन। त्वदभिमुखेत्यादि—तव अभिमुखं त्वां लक्ष्यीकृत्येत्यर्थः निविष्टं स्थापितं उत्तानमुन्नतं चञ्चूपुटं येन तथोक्तेन।

(१३७) विहृत्य—विचरणं कृत्वा। दिदृक्षोः—द्रष्टुमिच्छोः।

(१३८) शीकरवर्षिभिः—सजलकणैः। निस्वनैः—वाद्यध्वनिभिः। उन्निद्रैः—विकसितैः। अमलैः—स्वच्छैः। नीत्वा—प्रापय्य। निर्वृतिं—सुखम्। चौणधनां—

शीकरवर्षिवातादिसम्पद्विहीनां। वहन्—धारयन्। धन्यः—श्लाघ्यः। मृणाली-च्छलात्—बिसवितरणव्याजेन। नवेन्दुविशदानि—नवेन्दुर्द्वितीयाचन्द्रः तद्वत् विशदानि शुभ्राणि नवेन्दोरुपमानत्वात् सूक्ष्माणीत्यपि प्रतीयते। अस्थीनि—मृणालरूप-कीकसानि। पद्माकरः—पद्मोत्पादकः सरोवरः। यदा शीकरवर्षिवातादिसम्पदो न सन्ति तदा पद्माकरः सरोवरः स्वस्य मृणालरूपाण्यस्थीन्यपि याचकेभ्यो ददातीति स धन्य इति विशदार्थः।

(१४०) बद्धः—सेतुबन्धनसमये वानरैरिति शेषः। गिरीत्यादि—गिरिणा मन्दराख्येन यत् मंथनं विलोड़नं तेन मुषितमपहृतं सर्व्वस्वं यस्य स देवासुरैरिति शेषः। परभीतेत्यादि—परस्मात् शत्रोः पक्षच्छेत्तुरिन्द्रादित्यर्थः, भीतस्य भूधरस्य मैनाकस्य रक्षायाम्। दीक्षितः—धृतव्रतः कृतनिश्चय इत्यर्थः।

(१४१) गुरुतागर्व्वं—अतिगभीरजलत्वेन यद् गुरुत्वं तस्य गर्व्वस्तं। अन्यस्मात्—अपरजलाशयात्। पोतस्थाः—अर्णवयानारोहिणः।

(१४२) कल्लोलेन—महातरङ्गेण वेल्लिताः चालिता ये दृषदः प्रस्तरखण्डाः तेषां परुषाः कठोरा ये प्रहारास्तैः। मकराकर—हे हिंस्रजलचरनिलय। प्रस्तराघातेन रत्नान्यवमन्यमानस्य सागरस्य तदानीं रत्नाकरेति विहाय मकराकरशब्देन सम्बोधनं समुचितमेव। मावमंस्थाः—अवमानितानि मा कार्षीः। कौस्तुभेन—तन्नाम्ना विष्णु-वक्षःस्थश्रेष्ठमणिविशेषेण। तव नाम—रत्नाकर इत्यर्थः।

(१४३) वारां—जलानाम्। पूर्णो निलयः—अशून्य आधारः। तृष्णा—धन धनलिप्सा। ताम्यत्तिमिमकरं—ताम्यन्तः खिद्यमानाः तिमिमकरा यत्र तथाभूतं सन्तम्। मुनिः—अगस्त्यः।

(१४४) व्रजतः—विष्णुसमीपं गच्छतः। पाथोनिधे—हे समुद्र। आन्तरं—अन्तर्गतं तवेति शेषः। आवहेथाः—कुर्य्याः। न कदाचिदेनं विस्मरेरित्यर्थः।

(१४६) ध्वान्तौघः—अन्धकारसमूहः। निर्व्वान्ति सूर्य्योपलाः—सूर्यकान्तादयो मणयः निर्व्वाणतां लभन्ते। ये—पेचका इत्यर्थः। ध्वाङ्क्षभियाँ—काकभयात्।

(१४८) इयं हि लौकिकी रीतिर्यद् बद्धस्तिष्ठति मुक्तश्च धावतीति। अत्र तु तद्वैपरीत्यमिति।

(१४९) यस्य हृदयं नास्ति स कथं सहृदयो भवतीति विरोधाभासः। तत्-परिहारस्तु उदरचिन्तापराङ्मुखत्वादुन्नतमना इत्यर्थकरणात्।

(१५०) अन्तकः—यमः। अन्तकालं—मृत्युसमयम्। उत्तमर्णस्य—ऋणदातुः।

(१५२) तेन—तेजीयसां तेजसा। तेजीयसां—तेज इति शेषः। न—सह्य-मिति शेषः। सिकता—वालुका; रवितेजसा तापिता इत्यर्थः।

(१५३) जहत्—परित्यजन्।

(१५४) अवयः—मेषाश्छागला वा। केवलकवयः—विद्यारहिताः कविता-लेखकाः। केवलं धीराः—विद्यासम्पन्नाः कवितारचनानभिज्ञाः। कीराः—शुक-पक्षिणः। वीराः पण्डितकवयः—ये जनाः पण्डिताः कवितारचनाशक्तिसम्पन्नाश्च त एव वीराः सर्वेषां जेतारः इत्यर्थः। अवमन्ता—अवमाननाकारी। गवयः—गोवत् पशुविशेषः वानरविशेषो वा।

(१५५) कुशलैः—दक्षैः अश्वचालननिपुणैरित्यर्थः।

(१५७) अणुः—क्षुद्रः अल्प इति यावत्। नितरां—सम्यक्। तक्रस्य—'घोल' इति यस्य प्रसिद्धिः तस्य।

(१५९) बोधयन्ति विज्ञापयन्ति। लोकानां—लोकानां मध्ये, निर्द्धारणे षष्ठी; लोकानां दर्शयन्तीति वा अन्वयः, तत्र कर्म्मणि सम्बन्धविवक्षायां षष्ठी। अदातुः—कृपणस्य।

(१६०) मृदां—मृत्तिकानाम्, कर्म्मणि षष्ठी। मुदे—आनन्दाय।

(१६१) दशमो ग्रहः—नवभ्यो ग्रहेभ्यो विलक्षण इत्यर्थः।

(१६३) सिद्धपुरुषो हि स्वमहिम्ना सर्व्वं पश्यति, तन्तु न कोपि द्रष्टुं शक्नोतीति साम्यम्।

(१६४) विह्लणकवेः प्रपितामहो भट्टमुक्तिकलस इति विक्रमाङ्कदेवचरिते-ऽष्टादशसर्गे निर्णीतम्। "द्वन्द्वो द्विगुरपि चाहं मद्गेहे नित्यमव्ययीभाव" इति वङ्गदेशीयः पाठः; तत्र द्वन्द्वं मिथुनमस्यास्तीति अर्शआदित्वात् अच्। द्विगुः—द्वौ गावौ यस्य सः। सद्वन्द्वः—स्त्रीपुरुषरूपव्यक्तिद्वयात्मकः। अव्ययीभावः—व्ययाभाव-सम्पन्नः। तत्पुरुष......बहुव्रीहिः—हे पुरुष तत् कर्म्म धारय कुरु येन अहं बहुव्रीहिः बहुधान्यसम्पन्नः स्याम्।

(१६५) गृहगोधिका—गृहगोधिका, 'टिक्टिकी' इति भाषा। असून्—प्राणान्। लूतातन्तुः—ऊर्णनाभजालम्।

(१६६) विकसामि—अद्य त्वया धनमादाय आगन्तव्यमिति मत्वा हृष्यामि इत्यर्थः। सङ्कोचम् उपैमि—अद्यापि नागतमिति दुःखमनुभवामीत्यर्थः।

(१६७) दूये—खेदं प्राप्नोमि। मणिकङ्कणवर्ज्जितम्—मणियुक्तं यत् कङ्कणं

तेन वर्ज्जितम्। परम्—अत्यन्तम्। नणिकङ्कणवर्ज्जितम्—नणिकं सन्मयपात्रं, 'जाला' इति भाषा ; कणवर्ज्जितम् धान्यकणरहितम्।

(१६९) कर्णामृतं—श्रुतिसुखदम्। सूक्तिरसं—कविवचनमाधुर्य्यम्। केलि-वनं—क्रीडाकाननम्। क्रमेलकः—उष्ट्रः।

(१७०) सुनिष्णातः—सुनिपुणः, वेदान्तशास्त्राणां निखिलनिगूढतत्त्वविदपि। मैनाकः—तदाख्यो गिरिः। स च पर्व्वतपक्षच्छेदनप्रवृत्तपुरन्दरभयात् समुद्रं प्रविवेशेति पौराणिकी वार्त्ता। मार्द्दवं—समुद्रे चिरमज्जनेनाप्यवयवशैथिल्यात् कोमलत्वम्।

(१७१) मित्रोदये—मित्रस्य सुहृदः ; पक्षे सूर्य्यस्य। उदये—अभ्युन्नतौ ; पक्षे प्रकाशे। ग्लानिं—मालिन्यम्। दोषागमे—दोषस्य अनिष्टस्य आगमे उपस्थितौ ; पक्षे दोषा रात्रिः तस्या आगमे। सम्बन्धमात्रेण—सम्पर्कमात्रेण। दहति—अनिष्टमाचरति ; पक्षे भस्मीकरोति।

(१७२) आविष्कृतान्—अन्यैरुक्तान्। कलयन्ति—साभिनिवेशं शृण्वन्ति। तूष्णीं—मौनमवलम्ब्येत्यर्थः। दुश्चेतसः—खलाः। ननु—अवधारणे। रागात्—अनुरागात्। नली व्याधानां पक्षिवेधनशरविशेषः। सप्तानां नलानां समाहारः सप्तनली ; निजा सप्तनली ताम्।

(१७३) आशाग्रहग्रस्तैः—आशालुब्धैः कवलीकृतैः।

(१७४) दशपुत्त्रपुत्त्रिणी—दशभिः पुत्त्रैः पुत्त्रवती, जीवद्दशपुत्त्रजननी इत्यर्थः।

(१७८) सृष्टिकृता—विधात्रा। वृत्तिः—जीविका। प्रायः—बाहुल्येन।

(१७९) यतेः व्रतानुरोधात्, सेवकस्य तु द्रव्याभावात्। पापधर्म्मजं पार्थक्यं—सेवकस्य पापजनितः यतेस्तु धर्म्मजनितः प्रभेदः।

(१८१) हरिः—घोटकस्य। "हरिरिन्द्रो हरिर्भानुर्हरिर्विष्णुर्हरिर्मरुत्। हरिः सिंहो हरिर्भेको हरिर्वाजी हरिः कपिः। हरिरंशुर्हरिर्भीकर्हरिः सोमो हरिर्यमः। हरिः शुको हरिः सर्पः स्वर्णवर्णो हरिः स्मृतः"—अनेकार्थध्वनिमञ्जरी। स्पर्द्धा—विवादः। विदुषा—पण्डितेन सहेत्यर्थः। तथाच—"समुन्नयन् भूतिमनार्य्यसङ्गमाद्वरं विरोधोऽपि समं महात्मभिः।"—इति किराते।

(१८२) दारान्—अत्र दारशब्देन लक्षणया दारगतरूपलावण्यादिकं बोध्यम्। तच्च अपत्यजननानन्तरमेव नश्यतीति। यद्वा स्तन्यदानाद्यनुरोधेन पत्नी पतिं परित्यज्य पुत्त्रसमीपे प्रायो वर्त्तत इति पुत्त्रस्य दारहारकत्वम्।

(१८४) याचकं प्रार्थनां कुर्व्वाणं जनं लोकः अर्थिनं धनवन्तं वदति ;

वस्तुतः अर्थयते इति अर्थी तम्। रक्षाकर्त्तारं जगत्पालकं विष्णुं जनार्द्दनं लोकपीड़कं कथयति ; वस्तुतः जननामानमसुरम् अर्द्दितवान्, जनैः अर्द्यते प्रार्थ्यते इति वा जनार्द्दनः तम्। संहारकं संहारकर्त्तारं देवञ्च शिवं मङ्गल-निदानं वक्ति ; वस्तुतः जगत्संहार एव शिवस्य कार्य्यम्। लोकः भुवि जगति निरङ्कुशः निरर्गलः।

(१८९) रसभावोन्नटाः—रसभावोत्कृष्टाः। नवायन्ते—नवा इव आचरन्ति।

(१९०) नयः—नीतिः। दाक्ष्यं—बहुषु कार्य्येषु पटुत्वम्। नावसीदति—न दुःखमनुभवति।

(१९६) एतत् पूर्व्वोक्तं त्रिविधं दानं। "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" (पा १।२।६९) ; इति क्लीवत्वं पाक्षिकमेकत्वञ्च। भक्तदानैः—अन्नदानैः।

(१९७) यथा काचिद्वालिका प्रांशुत्वात् पुष्पाणि चेतुमशक्नुवती दण्डेनाहत्य बलाद् गृह्णाति तद्वदिति व्यज्यते।

(१९८) चेतनो यदि जनः—ध्रुवं धनं धनमिति वदतीति शेषः।

(२०१) मृतं—मरणं, नपुंसके भावे क्तः। अमृतायते—अमृतमिव आचरति।

(२०४) कुम्भोद्भवेन मुनिना—कुम्भजातेन ऋषिणा अगस्त्येन इत्यर्थः।

(२०५) अव्ययेभ्यः—न विद्यते व्ययो येषां तेभ्यः कृपणेभ्य इत्यर्थः ; पक्षे अव्यय-शब्देभ्यश्च। अर्थान्—धनानि ; पक्षे अभिधेयानि। सहस्रशः—अनेकानि, अव्ययान्यनेकार्थानीति स्मरणात्।

(२०६) अन्तरायो विघ्नः तेन परिग्रस्तः। दुर्द्दिनं—मेघाच्छन्नदिनं। "मेघाच्छन्नेऽह्नि दुर्द्दिनम्" इत्यमरः।

(२०८) अपूर्व्वेव—अपूर्व्वा अभिनवस्वरूपा एव तिष्ठतीति शेषः। अपूर्व्वत्वं विवृणोति तरन्तीत्यादिना। अधःस्थिताः—निम्नदेशवर्त्तिनः अवनता इत्यर्थः। तरन्ति—ज्ञानोपदेशेन संसारक्लेशं नानुभवन्ति। उपरिवर्त्तिनः—मर्य्यादां लङ्घयितु-कामाः। मज्जन्ति—ज्ञानोपदेशं विना अधोगच्छन्ति ; पक्षे सुगमम्।

(२१०) अनामा—अनामिका, अङ्गुरीयधारणोपयोगिनी अङ्गुली।

(२१२) ब्रह्मन्—भगवन्। त्रिजजन्मनां—त्रिजेभ्यो ब्राह्मणेभ्यो जन्म येषां, तेषाम् ब्राह्मणानामित्यर्थः।

(२१५) गृहिण्याः—भार्य्यापेक्षया, "पञ्चमी विभक्ते" इति विभक्तनिर्द्धारे पञ्चमी। कौस्तुभः—समुद्रमन्थनजातत्वात् लक्ष्म्याः सोदरत्वं कौस्तुभस्य।

(२१६) यत् स्वल्पमपि धनं लभ्यते तदेव बहु मन्यते इत्यर्थः।

(२१७) भूभृतां नृपाणां पर्वतानाञ्च तुष्टिकरौ। एकधर्म्माणौ एकः अभिन्नः धर्म्मः भूभृत्तुष्टिकरत्वरूपो ययोस्तौ। "धर्म्मादनिच् केवलात्" (पा ५।४।१२४) इति बहुव्रीहौ समासान्तः अनिच्प्रत्ययस्तेनैव नान्तत्वं। तयोः करीन्द्रस्य रेफस्य कवीन्द्रस्य वकारस्य भेदः पार्थक्यं; पक्षे रवश्च रवश्च तौ तयोः इति एकशेषे रवौ कण्ठस्वरौ तयोर्भेदः।

(२१८) यथा कस्याश्चित् कुरङ्गदयितायाः अतिलोलं जीवितं सिंहशार्दूलयोरन्तरमासाद्य नातिचिरमुत्सहते स्थातुं तद्वत् सुकवितापि नैयायिकवैयाकरणयोः स्थूलहस्तावलेपान् परिहरन्ती नास्पदं लब्धुं शक्नोति सुधीसमाजेषु।

(२१९) साधुसमीपे श्लोकः असाधुसमीपे च शोक इति भावः।

(२२४) हृषीकव्रजे—इन्द्रियसमूहे। दूने—दुःखिते।

(२२७) सारमेयाः—कुक्कुराः। एणी—हरिणी। शावकैः—शिशुभिः।

(२२८) संसारे शयने—संसाररूपशय्यायां अविद्यामयीं मायामयीं निद्रां लब्ध्वा हे चित्त त्वं विघूर्णितं सत् इमान् पूर्वोक्तान् बहुविधान् स्वप्नान् पश्यसि।

(२२९) निःसारपदवी—निःसरणमार्गः; बहिर्गमनपथ इत्यर्थः। दवीयसी—अतीव दूरवर्त्तिनी। अन्तरा—मध्ये। मदिरेक्षणा—कामिनी।

(२३१) अशनं—खाद्यद्रव्यम्। वसनं—वस्त्रम्। मे मे कुर्वाणम्—मम मम इति कुर्वाणम्; पक्षे मे मे इत्याकारं ध्वनिं कुर्वाणम्। कालवृकः—काल एव वृकः व्याघ्रः। पुरुषाजम्—पुरुष एव अजः छागः तम्।

(२३२) रामेण त्वरस्वेति सीता कथिताऽभूदित्यन्वयः।

(२३३) शान्तिरूपया कन्यया लसन् विराजमानः कण्ठो यस्य। मन एव स्थाली पात्रं तत्र मिलन्ती कन्ती यस्य। त्रिपुरारिपुरद्वारि—शिवगृहद्वारे।

(२३४) पुनःपुनः—वारंवारम्। स्वसन्निधिं—स्वनिकटम्। मन्दकन्दुकवत्—नीचकन्दुकवत् नरः मृत्योः यमस्य क्रीडनकं क्रीडार्थवस्तु।

(२३५) निदाघः—उत्तापः। "निदाघो ग्रीष्मकाले स्यादुष्मस्वेदाम्बुनोरपि" इति मेदिनी। अलं—समर्था।

(२३६) बलिकल्पितः—देवतायै बलिरूपेण कल्पितः उपस्थापितः मेषः यथा मूर्ध्नि शिरसि न्यस्तं उत्सर्जनार्थं प्रदत्तं दूर्व्वाक्षताद्यं मुदा आनन्देन अत्ति खादति।

(२३७) पर्य्यणायि—परिणीता। परिपूर्व्वकात् नीधातोः कर्म्मणि लुङ्।

जनकस्य—मिथिलाधिपतेः ; पक्षे पितुः। अजवंशजन्मनः—अजस्य दशरथपितुर्वंशे जन्म यस्य तस्य ; पक्षे छागवंशजातस्य।

(२३६) उपनेत्रम्, उपचक्षुः—'चश्मा' इति भाषा।

(२४१) स्वजनकं—निजपितरं मृगम् ; कस्तूर्याः मृगनाभिजातत्वात्।

(२४२) जीवनदानैः—जलदानैः ; पक्षे निजप्राणदानैः। तर्षामर्षं—तर्षस्तृष्णा तज्जनितः अमर्षः असहिष्णुता तम्।

(२४४) घोषयन्ती—अस्तीति शेषः।

(२४५) द्वात्रिंशदिति—द्वात्रिंशत् दशना दन्ता त एव द्वेषिणः शत्रवः तेषां मध्ये। दशनैर्जिह्वा दश्यते इति तेषां द्वेषित्वम्। शिक्षितमिति णिजन्तप्रयोगः। सञ्चारकौशलम्—शत्रुमध्ये विचरणनैपुण्यम्।

(२४६) गमनम्—प्राप्तिः आगमनमित्यर्थः।

(२४७) सर्वं ते न्याय्यं किन्तु गुञ्जया कनकतुलना न ते न्याय्या इति।

(२४९) कोटिद्वयस्य—कोटिरग्रभागः तस्या द्वयं तस्य ; पक्षे द्विकोटिसंख्यकधनस्य। सद्वंशजं—उत्तमवेणुजातम् ; पक्षे उत्तमकुलसम्भूतम्। नतं—अवनतं। असद्वंश्य—निकृष्टवेणूत्पन्नः ; पक्षे दुष्कुलप्रभवः। लक्षः शरव्यं तस्य लाभाभिशङ्कया तत्प्राप्त्याशया लब्धः ; पक्षे लक्षसंख्यकधनलाभाशया।

(२५०) पयोधरपदं—मेघत्वम्। ज्वलनस्य—स्वोत्पादकस्य वह्नेः। स्वबन्धुजनम्—अनलादेव धूमोत्पत्तेरिति भावः।

(२५१) अनन्तः—विष्णुः ; पक्षे असंख्या जनाः। पुनर्भवः—पुनर्जन्म, पक्षे नखः। नखरञ्जनी—'नहन्' इति भाषा।

(२५२) भूसुराः ब्राह्मणाः सूरयः पण्डिताश्च तैः सेवितम्। महद्भिः सेवितत्वात् महत्त्वं नद्यस्य प्रकटितम्।

(२५३) प्रतारणाय—प्रकर्षेण नद्यादेः पारनयनाय ; पक्षे प्रवञ्चनाय। दारुणा—काष्ठेन करणेन ; पक्षे निष्ठुरा ( जिह्वाविशेषणम् )।

(२५४) स्नेहः—तैलं ; पक्षे आसक्तिः। पात्रं—सत्पात्रं ; पक्षे आधारः।

(२५५) द्विषम्—शत्रुम्। अविनीतं—दुरन्तम्, असाध्यमिति यावत्। शरणागतं—गृहीताश्रयम्। दलयति—पीडयति।

(२५६) सद्गुणः—उत्तमगुणविशिष्टः ; पक्षे सूत्रबद्धः। वंशोद्भवः—वेणूत्पन्नः ; पक्षे सत्कुलजातः।

(२५७) रसनेन—जिह्वया। "रसनं ध्वनिते स्वादे रसज्ञारास्नयोरपि।"—इति हेमचन्द्रः। एडः—वधिरः। "स्वादेडे वधिरः।"—इतिः अमरः। अवनाटः—चिपिटनासः। "अवटीटोऽवनाटश्चावभ्रटो नतनासिके।"—इत्यमरः।

(२५८) (क) प्राकोपितः—सम्यक् क्रोधितः। मधुरं हि—मिष्टवचनमेव। रौति—ब्रवीति। उद्गिरते—उद्गिरति। "आत्मनेपदमिच्छन्ति परस्मैपदिनां क्वचित्" इति आत्मनेपदम्।—इति संक्षिप्तसारः।

(ख) साधुरेव—प्रकृत्या साधुरित्यर्थः। मधुरं हि—मधुरमेव। "अतीत हि गुणान् सर्व्वान् स्वभावो मूर्ध्नि वर्त्तते" इति भावः।

---

# तृतीय-प्रवाहः।

## विषय-सूची।

| विषयः | | | श्लोकाङ्कः |
|---|---|---|---|

# तृतीय-प्रवाहः ।

## श्लोक-सूची ।

| श्लोकाद्यांश: | श्लोकाङ्क: |
| --- | --- |

---

# उद्भट-सागरः

## तृतीय-प्रवाहः ।

### देवता-तरङ्गः ।

#### परब्रह्म ।

( १ )

ब्रह्मा विष्णुः पिनाकी शिखियमपवनाः पाशिचन्द्रार्कशक्रा
नागा गन्धर्वदैत्या ग्रहवसुमुनयः शैलपाथोधिनद्यः ।
देशा द्वीपाश्च मर्त्याः पशुपतगगणाः स्वर्गपातालपृथ्व्यः
संलीना यस्य देहे वसतु मनसि मे विश्वरूपः स नित्यम् ॥

( उद्भटसागरस्य )

( २ )

विष्णुर्वा त्रिपुरान्तको भवतु वा ब्रह्मा सुरेन्द्रोऽथवा
भानुर्वा शशलक्षणोऽथ भगवान् बुद्धोऽथ सिद्धोऽथवा ।
रागद्वेषविषार्त्तिमोहरहितः सत्त्वानुकम्पोद्यतो
यः सर्वैः सह संस्कृतो गुणगणैः कस्मैचिदस्मै नमः ॥

( स्वामिदत्तस्य )

मुग्धबोधव्याकरणस्योपसर्गसूत्रमुद्धरन् विंशत्युपसर्गात्मकेन श्लोकेनानेन परब्रह्मोपासनामुपदिशति :—

( ३ )

यदिह कर्णधारो भवोदन्वति निष्परोपाधि सुदुष्प्रापम् ।
अवनिपर्य्यभिव्यापि संप्रति गिरो मनसोऽपि विषयीकुरु तत ॥

( सरस्वत्युपाधिकक्लृष्णानन्दस्य )

( ४ )

निर्गुणो निष्क्रियोऽप्यस्मि निष्कलो निरुपाधिक: ।
अरूपश्च विनोपायैरहं ब्रह्मास्मि निश्चितम् ॥

( श्यामाचरण कविरत्नस्य )

---

## ब्रह्मा ।

( ५ )

मृणालसूत्रधिक्कारिप्रेमसूत्रसुसंयतम् ।
करोति मिथुनैक्यं यस्तं नमामि प्रजापतिम् ॥

( उद्भटसागरस्य )

---

## सरस्वती ।

( ६ )

श्रुत्वाऽपि माधव: स्वामी सपत्नीति हरिप्रिया ।
तस्मिन्नेव स्थिरा या स्यात् तां नमामि सरस्वतीम् ॥

( उद्भटसागरस्य )

---

## वीणा ।

( ७ )

वीणारवच्छलेन सरस्वत्याः खेदोक्तिरियम् :—

आपाणिग्रहणादतिप्रणयितो कण्ठे स्थिताहं प्रभोः
सर्वैरेव हरिप्रियेति कमला सोऽप्युच्यते माधवः ।
दूनाऽप्यस्मि न तेन मत्सुतगणाः पद्मासुतस्यानुगा
वाण्येत्याधिनिवारणाय सततं संगीयते वीणया ॥

## संस्कृत-भाषा ।

( ८ )

याऽचय्यं बीजमेकं जगदखिलगिरां सर्वसाफल्यमूलं
या रम्यस्निग्धवर्णा मृदुमधुरपदालङ्कृतिश्लिष्यमाणा ।
या च्छन्दःसूत्रबद्धा विविधरसगुणा भूरिभावान्विता या
सा भाषा संस्कृताख्या प्रतिजनि कुरुतां सेवकं मां स्वकीयम् ॥

( उद्भटसागरस्य )

## विष्णुः ।

( ८ )

शङ्खोऽन्तः कुटिलो बहिश्च धवलश्चक्रश्च वक्रं तथा
बद्धास्यां च गदाऽम्बुजं मलभवं शेषः सहस्रानन: ।
वृक्षात्मा तुलसी चला च कमला हृत्कौस्तुभः प्रस्तरो
भक्तं दर्शयती हतोऽपि कुटिलैरेतैर्य ईड़े हि तम् ॥

( उद्भटसागरस्य )

( १० )

भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्द्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये ।
लावण्यैकमहानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्त्तिशमनं नेत्रे तनुर्वा हरेः ॥

( भागवतामृतदत्तस्य )

( ११ )

किं पाद्यं पदपङ्कजे समुचितं यतोऽभवा जाह्नवी
किं वाऽर्घ्यं मुनिपूजिते शिरसि ते भक्त्याहृतं साम्प्रतम् ।
किं पुष्पं त्वयि शोभते व्रजपते सत्पारिजातार्चिते
किं स्तोत्रं गुणसागरे त्वयि हरे केनार्चयेत् त्वां नरः ॥

( १२ )

भगवन्तं प्रति कस्यचिद् दरिद्रस्योक्तिरियम् :—

दीनं मामपहाय विश्वभरणव्यापारभारं दधत्
सामानाधिकरण्यमन्वयमुरीकृत्याऽसि विश्वम्भरः ।
आस्तां तच्छरणागतं प्रतिदिनं मामेवमापीड़यन्
यद् गोविन्द जनार्दनो भवसि किं तेनापि नो लज्जसे ॥

---

## विष्णु-लीला ।

( १३ )

श्रीक्षेत्रे जगन्नाथमूर्त्तिः कथं दारुमयीत्याह :—

एका भार्य्या प्रकृतिमुखरा चञ्चला च द्वितीया
पुत्त्रोऽप्येको भुवनविजयी मन्मथो दुर्निवारः ।
शेषः शय्या सदनमुदधिर्वाहनं पन्नगारिः
स्मारं स्मारं स्वगृहचरितं दारुभूतो मुरारिः ॥

( जगन्नाथतर्कपञ्चाननस्य )

---

## लक्ष्मीः ।

( १४ )

मातः कम्पं गुरुमपि कमले संत्यज त्वं विषादं
मा याहि त्वं बलभिदमयि संजृम्भमत्रैव तिष्ठ ।
मा गास्त्वं वा श्वसनमुरुरयं मन्थमुग्धः समुद्रः
प्रोच्येदं यां प्रशमनमनयत् पातु सा लोकमाता ॥

( उद्भटसागरस्य )

---

## लक्ष्मी-चरित्रम् ।

( १५ )

आगच्छति यदा लक्ष्मीर्नारिकेलफलाम्बुवत् ।
निर्गच्छति यदा लक्ष्मीर्गजभुक्तकपित्थवत् ॥

( १६ )

( क )

लक्ष्मीं प्रति सरस्वत्या दुरुक्तिरियम् :—

हे लक्ष्मि क्षणिके स्वभावचपले मूढ़े च पापेऽधमे
न त्वं चोत्तमपात्रमिच्छसि खले प्रायेण दुश्चारिणी ।
ये देवार्च्चनसत्यशौचनिरता ये चापि धर्म्मे रता-
स्तेभ्यः कुप्यसि निर्दये गतमतिर्नीचोऽपि ते वल्लभः ॥

( विज्जकायाः )

( ख )

सरस्वतीं प्रति लक्ष्म्याः प्रत्युक्तिरियम् :—

नाहं दुश्चरिता न चापि चपला क्षुद्रो न मे रोचते
नो शूरो न च पण्डितो न च शठो हीनाचरो नैव च ।
पूर्वस्मिन् कृतपुण्ययोगविभवः प्राप्नोति मे सत्फलं
लोकानामसहिष्णुता सखि कथं दृष्ट्वा तदीयं सुखम् ॥

( विज्जकायाः )

( १७ )

ब्राह्मणाश्चिरदरिद्रा यतस्ते लक्ष्मीकृपारहिताः । एकदा सर्व्वे ब्राह्मणा मिलिता नारायणसमीपमपेत्य ऊचुः देव अस्मदालये पदमर्पयितुं लक्ष्मीदेवीमनुरुध्यस्व येन चास्माकं चिरदारिद्र्यमपगमिष्यति । एतदाकर्ण्य लक्ष्मीः सरोषमाह नाहं कदापि ब्राह्मणालये पदं करिष्यामि यतः :—

पीतोऽगस्त्येन तातश्चरणतलहतो वल्लभोऽन्येन रोषा-
दा बाल्याद् विप्रवर्यैः स्ववदनविवरे धारिता मे सपत्नी ।
गेहं मे च्छेदयन्ति प्रतिदिवसमुमाकान्तपूजानिमित्तं
तस्मात् खिन्ना सदाऽहं द्विजगणसदनं नाथ नित्यं त्यजामि ॥

---

## रामचन्द्रः ।

( १८ )

रामनाममहिमानं वर्णयति :—

माहात्म्यं परमं तवैव महतो हे राम नाम्नः क्षितौ
राकारं वदतो जनस्य सकलं निर्याति पापं हृदः ।
भूयस्तद् विशतीति रोधनविधावास्ते मकारस्ततो
जिह्वाग्रे तव राम नाम वसतु श्रीपूर्णचन्द्रस्य मे ॥

( उद्भटसागरस्य )

( १९ )

उत्फुल्लेन्दीवराक्षी शशधरवदना बिभ्रती शुभ्रकान्तिं
गत्वाऽसौ राजधानीं दशरथमवदत् कैकयी कोपयुक्ता ।
राजा रामाभिषेकाद् विरमतु सहसा निष्कलङ्के कुलेऽस्मिन्
भूपुत्री यस्य पत्नी स च भवति कथं भूपतो रामचन्द्रः ॥

---

## सीता ।

( २० )

भूतिर्भूमितले पणः परिणये रामेण युद्धं सतौ
कान्तारे गमनं दशास्यहरणं लङ्कापुरे रोधनम् ।
वह्नौ शुद्धिरथ प्रजापयशसाऽरण्ये च निर्वासनं
येयं जन्मत एव दुःखदलिता तां नौमि रामप्रियाम् ॥

( उद्भटसागरस्य )

( २१ )

हरशरासनभङ्गं कुर्व्वतो रामस्य करकाठिन्यं शङ्कमानां सीतां प्रति तत्सख्या उक्तिरियम् :—

सीते मा कुरु सम्भ्रमं यदधुना काठिन्यमङ्गीकृतं
तद् रामस्य करद्वयेन धनुषो भङ्गाय नाङ्गाय ते।
क्षौणी दीर्य्यति जीर्य्यति क्षितिरुह: शुष्यन्ति नीराशया:
किन्त्वेका नलिनी दिवाकरकरैरानन्दथुं विन्दति॥

( २२ )

रामेण सह वनं गच्छन्ती सीता स्वक्लेशं वर्णयति :—

करैरेवात्युग्रै: प्रतपति रघूणां कुलपति:
कृपालेशं मात: मयि न कुरुते कण्टकमयी।
मम प्राणाधीश: क्षणमपि विलम्बं न सहते
विधौ वामे वाम: सुहृदपि च कामं रिपवति॥
(हनूमत:)

( २३ )

श्रीरामचन्द्रप्रेषितं चन्द्रकान्तमणिघटितमङ्गुरीयकं दृष्ट्वा सीताया: खेदोक्तिरियम् :—

रामप्रेरितचन्द्रकान्तघटितस्वर्णाङ्गुरीयं निशि
शीतांशो: करयोगत: स्रवदप: संवीक्ष्य सीताऽब्रवीत्।
किं त्वं रोदिषि रामचन्द्रविरहात् तस्यैव पाणिग्रहे
विच्छेद: स्फुट एव किं न विदितं मां वीक्ष्य सुखं भव॥

---

## दशरथः ।

( २४ )

दशरथस्य मृत्युकारणमाह :—

प्राणाधिके वनं रामे सुमन्त्रे च गृहं गते ।
त्यक्तो राजा सुतत्यागाद्‌विश्वस्तैरिवासुभिः ॥

---

## हनूमान् ।

( २५ )

हनूमतः शौर्य्यं वर्णयति :—

चतुर्थजः पञ्चमगो दृष्ट्वा प्रथमसम्भवाम् ।
तृतीयं तत्र निक्षिप्य द्वितीयमतरत् तदा ॥

---

## रावणः ।

( २६ )

सीताहरणकाले कपटिनं रावणं वर्णयति :—

डिम् डिम् डिम् डिम् डिडिम् डिम्
डिमिमिति डमरुं वादयन् सूक्ष्मनादं
वम् वम् वम् वम् ववम् वम्
प्रवलगलवलैस्तालमालम्ब्य तुभ्यम् ।

कर्पूराकल्पभस्माञ्चित-
सकलतनू रुद्रमुद्रासमुद्रो
मायायोगी दशास्यो
रघुरमणपुरःप्राङ्गणे प्रादुरासीत् ॥

---

## अहल्या ।

( २७ )

मानवीं मूर्त्तिं गृहीत्वा अहल्या श्रीरामचन्द्रं प्रार्थयते :—

भूमौ दत्त्वा पदमिह समाधेहि चेलाञ्चलेऽस्मिन्
नाथाऽप्राप्यं त्रिजगति रजः पादपद्मद्वयस्य ।
योषा दोषास्पदमनुदिनं नित्यरोषस्तपस्वी
यस्य स्पर्शाद् रघुवर पुनर्नैष्टशो स्यां कदापि ॥

---

## अगस्त्यः ।

( २८ )

निःशेषपीतोज्झितसिन्धुराजस्य अगस्त्यस्य पत्न्याः समीपे मत्कर्तृकसमुद्रबन्धनवार्त्ता-कथनं निरर्थकमिति सीतां प्रति रामस्योक्तिः :—

वैदेहि पश्य कलसोद्भवधर्मपत्नीं
तत्र स्थिता च कथय स्वकथाः समस्ताः ।
स्वप्नेऽपि मा वद पयोनिधिबन्धवार्त्तां
सैषा मुनेश्चुलुकिताम्बुनिधेः कलत्रम् ॥

---

